परिरब्धभुजो जयश्रिया
नृपतिः प्रैक्षत [1]सह्यजातटीम् ॥ ३६ ॥

उदभूदथ तत्र नन्दनः
शरभोजिर्धरणीबिडौजसः ।
निपुणः परिपन्थिनिग्रहे
समरोत्साह इवाकृतिं वहन् ॥ ३७ ॥

अथ चोळपति[2]र्निशम्य तं
निकटोपागतमेकभूपतिम् ।
समराय हयादिमेदुराम्
पृतनां प्रेषयति स्म सस्मयः ॥ ३८ ॥

वनवह्निमिवाम्बुदच्छटा
विनिकर्तुं रिपुवर्गमुद्भटा ।
कुपितस्य तदैकभूपते-
रचलद्भूलतया समं चमूः ॥ ३९ ॥

रथिनो रथिनस्तुरङ्गिणो
हयिभिर्हस्तिपकाश्च हास्तिपैः ।
मिमिलुर्ववृधे ततो रणः
परितस्सुस्रुवुरस्रनिर्झराः ॥ ४० ॥

1. कावेरीतीरम् । 2. अत्र चोलपतिः अलगिरिनायकः मधुरानायकभूपस्य चोक्कनाथस्य भ्रातृस्थानीयः, मधुरातञ्जापुर्योर्युद्धे तञ्जापुरनायके विजयराघवे ससूनौ मृते यं मधुराचोक्कनाथः तञ्जापुरे स्वसामन्ततया न्यवेशयत् ।

अथ भोसलवंशभर्तुरु-
द्भटकोपारभटी भटच्छटा ।
नटति स्म [1]समित्तटे स्फुट-
त्त्रुटितारातिघटा [2]पटोत्कटा ॥ ४१ ॥

[3]मिहिरं बिभिदुर्विदारिता
भटवर्गेण तदैकभूपतेः ।
अदसीयघनप्रतापकि-
ङ्कर इत्युत्प्रतिघा इव द्विपः ॥ ४२ ॥

अथ शाहसुतस्य सैनिकैः
पुरमाक्रम्यत चोळभूपतेः ।
वरण[4]प्रसभाधिरोहणं
भुवि किं साहसिनां दुरासदम् ॥ ४३ ॥

महसां निधिरित्थमेकभू-
रमणश्चोळपतिं[5] निरस्य तम् ।

---

1. समित् युद्धम् । 2. पटो ध्वजपटः । 3. 'द्वाविमौ पुरुषौ लोके मित्रमण्डलभेदिनौ । परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥' इति न्यायेन एकमहीपतिहतानां द्विषां मिहिरमण्डलभेदः । प्रतापे एकमहीपतेः सूर्योऽयं किंकर एवेति रुषेव सूर्यं द्विषो बिभिदुरित्युत्प्रेक्षा । प्रतिघा कोपः । 4. प्राकारः । 5. चोकनाथेन तञ्जापुरे स्वायत्तीकृते स्वर्गतविजयराघवस्य पुत्रो वा पौत्रो वा कश्चित् चेङ्गमलदास इति शिशुः सजीव आनीत् । तदर्थमेव अलगिरिः तञ्जात एकोजिना निरस्तः । किन्तु नचिरात्स्वाभिषिक्तं चेङ्गमलदासमपि दूरीकृत्य एकोजिनैव तञ्जाराज्यमात्मसात्कृतम् ।

स्वकरेऽकृत चोळमेदिनी-
मपि तञ्जानगरं तदास्पदम् ॥ ४४ ॥

अथ शङ्करचिन्तनव्रते
नृपतौ ध्यायति सन्निधाय सः ।
दरहासमनोहरो हरो
गिरमूचे मधुरां कृपानिधिः ॥ ४५ ॥

पुरमेकविभो तवास्त्विदं
भज भद्रासनमत्र तेऽन्वयः ।
जगति प्रथितो नृपश्रियो
महितायाः प्रभवेदुपाश्रयः ॥ ४६ ॥

*

इति साधु निशम्य शूलिनः
कुलदैवस्य स वाचमेकराट् ।
मुदितो निलयीचकार ता-
मथ तञ्जानगरीमवन् महीम् ॥ ४७ ॥

शरभोजिवरोऽथ शाहभू-
हिमरश्मेरनुजः किशोरकः ।
नगरेऽत्र विवृद्धिमुद्वहन्
समतानीन्मुदमेकभूपतेः ॥ ४८ ॥

उदपादि ततस्तनूभवः
तुलजाराज इति क्षमापतेः ।

परिवृद्धिमुपानयन्मुदं
परिवृद्धिं स दधद्दिनेदिने ॥ ४९ ॥

शरभोजिविभुः प्रतापवान्
तुलजाराज इति प्रथान्वितौ ।
सदृशावनुजौ निजौ भुजा-
विव जातौ भुवि शाहभूविभोः ॥ ५० ॥

खुरलीविहृतौ धनुर्गता-
वपि विद्यान्तरशीलनेष्वपि ।
प्रतिपत्तुमियत्तया जनो
न किलासीदलमस्य पाण्डितीम् ॥ ५१

* मदनैरुपपन्नमूर्तिभि-
र्वसुधामागतवद्भिरिन्दुभिः ।
नरभावगतैः पुरन्दरै-
स्त्रिभिरेकप्रभुराबभौ सुतैः ॥ ५२ ॥

अथ शाहमहीसुधानिधिं
ललितोन्मीलितयौवनश्रियम् ।
अवलोक्य विवाहमस्य सं-
तनितुं चित्तमधत्त भूपतिः ॥ ५३ ॥

परिणेष्यति शाहराज इ-
त्यवकर्ण्य प्रथमानविक्रमः ।

उपहारगणानुपानयन्
धरणीपालवरास्ससंभ्रमम् ॥ ५४ ॥

[1]घनसारविसारिसौरभा-
नधितञ्जापुरवीथिमण्डलम् ।
हिमवारिकणानवाकिरन्
समनह्यन्नपि पुष्पतोरणम् ॥ ५५ ॥

कलिता विकचैस्सरोरुहैः
कमनीयैरपि चम्पकैः पुरे ।
नवतोरणधोरणी व्यभात्
पुरलक्ष्म्या इव पुष्पमालिका ॥ ५६ ॥

मणिकाञ्चनमञ्जुलांशुकै-
र्नवरम्भातरवः परिष्कृताः ।
ददतोऽभिमत[2] समस्फुरन्
सुरमाला[3] भुवमागता इव ॥ ५७ ॥

अथ चम्पकचारुतैलतः
कलिताभ्यङ्गसभङ्गकौतुकम् ।
स्नपिताथ तनोन्मुदा वधू-
मपि शाहाधिपमङ्गनाजनः ॥ ५८ ॥

---

1. कर्पूरम् 2. अभिमतं मणिकाञ्चनांशुकादिकं ददति हि सुरद्रुमाः । 3. कल्पवृक्षाः

अधिमङ्गळवेदिसङ्गत-
स्तरलाक्ष्या नरपालनन्दनः ।
उमयेव शशाङ्कशेखरो
रमयेवाम्बुजलोचनोऽस्फुरत् ॥ ५९ ॥

अधिरुह्य विवाहवेदिकां
सुमनस्तोमपरिष्कृतां तदा ।
मुदमादित राजशेखरो
धरणीभृत्सुतया समन्वितः ॥ ६० ॥

अधिवेदिकमश्वतोवधू-
वरयोर्वस्त्रविभूषणप्रभाः ।
उपयातवतां च मेदिनी-
बलयं तेजसतामनीनयन् ॥ ६१ ॥

वलवैरिमुखप्रिया[1] दिशो
वयमेभिस्सह सुन्दरांजनैः ।
समभूम विभूषणाञ्चिता
इति निर्वव्रुरिवोत्सवे भृशम् ॥ ६२ ॥

पटहादिपटुस्फुटस्वना[2]-
रभटीकृतवतोऽसृजन्निव ।

---

1. इन्द्राद्यधिदेवताकाः प्राच्यादयः । विवाहमहोत्सवार्थं परितोऽपि दिशस्तोरणमालिकादिप्रसाधनविशेषैरलंकृताः। यथा भर्तृसहिता मण्डितास्संबन्धिसुहृत्स्त्रियः समेत्य विवाहमहेन मुमुदिरे तथा दिक्पालकसहिता दिशोऽपि निर्वव्रुरिति भावः ।

2. स्वनः प्रतिध्वनिरूपः । अत्र 'पटुप्रतिस्वन' इति पाठः स्यात् ।

परीणीतिमहोत्सवे विभोः
ककुभो गीतिमुदीतकौतुकाः ॥ ६३ ॥

अधिसन्निधि शाहभूविभो-
स्सह वध्वोन्मिषतः शुभावहम् ।
उदगीयत सुन्दरीजनै-
र्हरगौरीपरिणीतिमङ्गळम्[1] ॥ ६४ ॥

अथ शाहवरः करे वधूं
परिगृह्णन्नतिवेलमस्फुरत् ।
कलयन्निजहस्तगामिनीं
स्मरराज्यश्रियमूर्जितामिव ॥ ६५ ॥

सुदृशश्शुभसूत्रबन्धनं
कृतवान् शाहविभुस्तदा बुधाः ।
समतन्वत सादरं तयोः
परमायुर्जननीश्शुभाशिषः ॥ ६६ ॥

अदसीयकरः तदा मृगी-
नयनाया गळसीम्नि संवलन्[2] ।
कुरुविन्दरुचा[3]वपाहसी-
दरविन्दं रविरश्मिसुन्दरम् ॥ ६७ ॥

---

1. 'गौरीकल्याणम्' इति समुदाचारसंप्रदायागतो विवाहमङ्गलगीतविशेषः । 2. 'वलेरात्मनेपदमनित्यं ज्ञापकात्' इति वामनसूत्रात् (का. अ. सू. ५. २. ३.) परस्मैपदं साधु । 3. कुरुविन्दरुचौ गलसीम्नीत्यन्वयः ।

वरमौक्तिकवर्षशीलितौ
ललिताङ्गौ दयितौ मिथःश्रितौ ।
कमलाकमलाक्षयोर्मिल-
त्कलशाम्भोधि[1]तरंगयोःश्रियम् ॥ ६८ ॥

कुलरूपवयोगुणैरमा-
वनुरूपा मुदमस्य तन्वती ।
वनिता व्यरुचद्वपुष्मती
विजयश्रीरिव वैषमेषवी[2] ॥ ६९ ॥

सहबन्धुनृपैर्वधूवरा-
वदधातामथ चारु भोजनम् ।
यदुदञ्चितमाधुरीजितं
त्वपयेवामृतमेति न क्षितिम् ॥ ७० ॥

मणिनूपुरचारुमेखला-
प्रमुखाकल्पझलंझलैः स्त्रियः ।
निरगुः परिवेषणोत्सुका-
स्तटितो मानुषतां गता इव ॥ ७१ ॥

शुभकाञ्चनपात्रपङ्क्तिषु
स्फुरदन्नं कलधौतपाण्डुरम् ।

---

1. कलशाम्भोधिः क्षीरसागरः । विषमेषोर्मन्मथस्य इयं वैषमेषवी ।

नवचम्पकपुल्लमल्लिका-
समवायं व्युदपीपदत्तदा ॥ ७२ ॥

सुरभिप्रचुराज्यशर्करा-
सरसव्यञ्जनपुञ्जरञ्जिताः ।
वरभक्ष्यसमृद्धयस्सुधा-
परिवाहा इव पर्यभुस्तराम्[1] ॥ ७३ ॥

स्मितवीक्षितमौळिचेष्टितै-
र्नृपतिष्वाहृतिकर्तृषु[2] प्रभुः ।
उपचारमसावुदाहर-
त्तनयोद्वाहमहे यथोचितम् ॥ ७४ ॥

अथ शाहविभुः परिष्कृत-
द्विरदस्कन्धगतो वधूयुतः ।
प्रचरन् पुरि निर्जरद्विपे
स्फुरतोऽगादुपमां शचीपतेः ॥ ७५ ॥

रथसैन्धवगन्धसिन्धुरा-
नधिरूढाः प्रभवस्तमन्वयुः ।
वरमर्दलभूरिभेरिका-
निनदौघप्रतिनद्धदिक्तटम् ॥ ७६ ॥

स्फुटदीपकलापरोचिषां
मणिहेमाभरणत्विषामपि ।

1. परितो बभुस्तराम् । 2. भुञ्जानेषु ।

निवहेन वहन्त्यभिन्नतां
हरितः स्म व्रजति प्रभौ तदा ॥ ७७ ॥

[1]शुचियन्त्रपरम्परामुखा-
न्मुखराः प्रोन्मिमिषुः स्फुलिङ्गकाः[2] ।
सह चम्पकसंपदां गणै-
र्विदधाना इव जल्पधोरणीम् ॥ ७८ ॥

कृतचक्रपरिभ्रमोऽनल-
प्रचयो यन्त्रभवः प्रभोर्धुरि ।
स्वसमत्वरुषा तदोजसा
विनिगृह्येव विघूर्णितोऽस्फुरत् ॥ ७९ ॥

स्व[3]नखेन्दुमहस्समाकृति-
प्रणयादिन्दुमिवोपसेवितुम् ।
वियदग्रमुदग्रमाविशन्
शुचियन्त्रस्फुरितस्फुलिङ्गकाः ॥ ८० ॥

धुरि शाहविभोर्मनोहरं
समनृत्यन् वरवारयोषितः ।
कलितामरसुन्दरीजयाः
कलगानाभिनयाकृतिश्रिया ॥ ८१ ॥

---

1. अग्निमयन्त्रम् (fire-works) 2. अग्निस्फुलिङ्गका वर्णाकृतिसाम्यात् चंपकपुष्पप्रकरा इव अस्फुरन्नित्यर्थः ।

3. 'स्व' इत्यनेन नायकस्य परामर्शः ।

उपयाति मनोजसुन्दरे
विभवैश्शाहमहीपुरन्दरे ।
अभवन् कुतुकाम्बराङ्किता
मदिराक्ष्यो मणिहर्म्यसङ्गताः ॥ ८२ ॥

इयमम्बुजलोचना क्रियत्
क्व नु कीदृक् किमधस्त वा तपः ।
यदमुष्य किलाङ्गसङ्गिनी-
त्यवदत् काचिदधीरलोचना ॥ ८३ ॥

निकटोपगमोपगूहने
सुदती काचन शाहभूविभोः ।
अभिसंदधती ततौ भुजौ
मणिहर्म्योपगता तदातनोत् ॥ ८४ ॥

वपुरस्य हृतस्मरस्मयं
परिपश्यन्त्यजनिष्ट काचन ।
प्रसिता[1] परिरम्भणोत्सवै-
र्विदलत्कञ्चुलिका विलासिनी ॥ ८५ ॥

तममुं नरपालनन्दनं
तरुणी कापि कटाक्षधारया ।
नवनीलसरोजमालया
मुहुराकर्षदिव स्मरातुरा ॥ ८६ ॥

मणिरञ्जितपात्रविस्फुर-
न्महनीयद्युतिदीपपङ्क्तिभिः ।

---

1. आसक्ता

तमसेवत सुन्दरीजनः
 वलकौतूहलनर्मिताशयः ॥ ८७ ॥

अथ मन्दिरमिन्दिरासरो-
 रुहनेत्रा[1]विव तौ स्नुषासुतौ ।
नृपतिः कलयन्नुपागतौ
 निरविक्षन् महतीं स निर्वृतिम् ॥ ८८ ॥

कविसेवकबन्धुभूपति-
 प्रवरानप्यपरान्नराधिपः ।
घनभूषणवाहनाम्बरै-
 र्बहुमेने स तुलातिलङ्घिभिः ॥ ८९ ॥

वशमेतु तवाखिला मही
 तनयास्सन्तु नयोज्ज्वलास्तव ।
इति शाहविभोश्शुभाशिषो
 मुदितायुङ्क्त मुहुर्द्विजावली ॥ ९० ॥

उपलभ्य महीसुराशिषा
 सुतमात्मानमपि प्रवर्धितम् ।
नृपतिर्मुमुदे महीसुरा-
 दरशीलः खलु भोसलान्वयः ॥ ९१ ॥

अनुरूपवधूकरग्रह-
 स्फुरदानन्दममन्दवैभवम् ।

---

1. सरोरुहनेत्रः पुण्डरीकाक्षो विष्णुः ।

शरभोजिविभुं विधाय स
प्रतिलेभेऽथ मुदं महीपतिः ॥ ९२ ॥

कमलादयितः पुराभव-
त्तनयः पङ्क्तिरथस्य संप्रति ।
स शिवस्तनयोऽस्य शाहभू-
विभुरित्येकनृपालमस्तुवन् ॥ ९३ ॥

मुरजिद्भगवान् पुरोदभू-
दधिभास्वत्कुलमिन्दुशेखरः ।
ननु शाहवरोऽद्य राजती-
त्यखिला भोसलवंशमस्तुवन् ॥ ९४ ॥

विमलैस्समनन्दयद्यथा
जनतां शाहविभुर्गुणोदयैः ।
शरदञ्चितपूर्णिमोदितो
न मयूखैरमृतद्युतिस्तथा ॥ ९५ ॥

पतितेऽपि हि शाहचन्द्रमाः
परिदृश्येत कदा निगिति ।
उदकण्ठि जनैर्नुनुत्सुभिः[1]
रघुरामानकलोकनव्यथाम् ॥ ९६ ॥

सदसद्ग्रहमौचितीं फला-
व्यभिचाराञ्चितरोपहर्षताम्[2] ।

---

1. नोदितुमिच्छुभिः। 2. सदसद्ग्रहः, औचिती, फल-अव्यभिचारिणौ रोपहर्षौ इति गुणोद्देशः

अपि तस्य मृशन् गुणान्तरा-
ण्यवहृत्को नु न हर्षविस्मयौ ॥ ९७ ॥

धरणीपरिणीतिमूर्जिता-
मथ शाहाधिपतेर्गुणोदधेः ।
प्रचकार च निर्ववार च
प्रभुमौलिरस्य हि तत्त्वकोविदः ॥ ९८ ॥

अथ राजकमौलिलालित-
स्थितिरारटीकत नाकमेकराट् ।
निजदोरभिगुप्तभूसुरा-
ध्वरदृप्तानमरानिवेक्षितुम् ॥ ९९ ॥

अथ शासतमब्धिमेखला-
मनघं शाहमहीपुरन्दरम् ।
नयनातिथितां नयन् जनः
प्रमुदं रागपदं समश्रयत् ॥ १०० ॥

कलयन् वसुधासुधानिधिं
वरभद्रासनवर्तिनं जनः ।
उदयाचलशृङ्गसङ्गतं
कमलिन्याः कमनं व्यभावयत् ॥ १०१ ॥

अधिहाटकभद्रपीठमु-
ज्ज्वलहारो निवसन् महीपतिः ।
कलधौत[1]सरोरुहस्थितिं
कलयन् हंस इव व्यशोभत ॥ १०२ ॥

1. स्वर्णम्

प्रकटीकृतदानवैभव-
स्स करेणाधरिताजरद्रुमः ।
अधिकुम्भि[1] निजृम्भयन् मुदं
क्षितिभृत्कुञ्जर ईक्षितो जनैः ॥ १०३ ॥

क्व महीभरणे समोऽस्य नो
यदनागस्फुरदादरोऽहिराट् ।
शतमन्युधरस्सुरद्विष(प)-
स्सदरीणां शिखरी कृतास्पदः[2] ॥ १०४ ॥

वहति क्षितिमूर्जितं विभा-
वहिराजप्रमुखा महीभृतः ।
बत गोपुरभारधारक-
प्रतिमाविभ्रममन्वशिश्रियन् ॥ १०५ ॥

---

1. गजारूढः । दानं प्रदानं मदजलं च । करेण दान शालिना अधरीकृतः अजराणां देवानां वृक्षः कल्पवृक्षः, गजपक्षे स्वकरेण अधरितः भग्नावपातितः अजरद्रुमः तरुणवृक्षः ।

2. भूभरणाधिकृतास्त्रयोऽपि शाहराजापेक्षया दोषदुष्टाः । तथा हि अहिराड आदिशेषः नो अनागस्फुरदादरः, न अनागस्केषु अपापेषु कृतादरः, किन्तु सदा नागस्फुरदादरः पन्नगवत्सलः । सुराद्विपः ऐरावतः अष्टदिग्गजेषु प्रथमः शतमन्युधरः अति-क्रोधनः । परिहारस्तु शतमन्युरिन्द्रः, तद्धारीति। शिखरी कुलाचलस्स दरीणां कन्दराणां कृतास्पदः, सद्-अरीणां सतामरीणां शत्रूणां कृतास्पदः ॥

अधरग्रहवर्जितं धर-
ण्यगलन्नीवि निरस्तकण्टकम् ।
चतुरं प्रतिलभ्य तं चिरा-
दुपभुञ्जानमनन्ददद्भुतम्[1] ॥ १०६ ॥

कृतदिक्करिकुम्भधिक्क्रिया-
न्निर्मपिता चारुपयोधरश्रिया ।
परिगृह्य भुजेन मेदिनी
परितोषं प्रतिलम्भितामुना ॥ १०७ ॥

अथ यौवनविस्फुरत्तनो-
स्तुलजाराजविभोश्शुभाकृतेः ।
सुदृशोरसदृशो महीपतिः
परिणीति व्यतनोत्कनीयसः ॥ १०८ ॥

प्रतिलभ्य युगीं मृगीदृशो-
र्नयलक्ष्मीविजयश्रियोरिव ।
अनुजो वसुधाहिमद्युते-
रवहत्प्रीतिमसमुद्र[2] वैभवः ॥ १०९ ॥

महितश्रि युगं यवीयसो-
र्नृपतिः स्वात्मसमं विभावयन् ।
समशोभत शक्रविक्रमः
क्षितिचक्रं परिपालयन्नयम् ॥ ११० ॥

---

1. अधर ओष्ठः नीचश्च; नीवी वसनग्रन्थिः मूलधनं च; कण्टकः पुलकः शत्रुश्च । 2. अनवधि-

अवधानधृतैर्नयक्रमै-
रघनिर्हारिभिरीतिसञ्चयाः ।
क्षितिभर्तुरमुष्य विक्रमैः
प्रतिपक्षा इव लम्भिताऽऽगमम् ॥ १११ ॥

अथ तं नरपालशेखरं
मधु[1]रासेवत संप्रसादयन् ।
नृपलोक इवाम्बुजस्फुर-
न्मधुधारामधुरैस्समीरणैः[2] ॥ ११२ ॥

मधुना सहकारपल्लव-
ग्रसनं रम्यमवापिताः पिकाः ।
अलिनादकृतश्रुतिक्रमा
धुरि तस्यैव मुदे जगुः कलम् ॥ ११३ ॥

चलिते मदनेऽब्जसंवल-
त्पवनस्यन्दनभाजि कूजितैः ।
पथिका विजहीत ता धृती-
रिति जल्पन्त इवाभवन् पिकाः ॥ ११४ ॥

दलकोरकवृन्दसुन्दरा
विबभुः किंशुकपादपा भृशम् ।

---

1. वसन्तर्तुः 2. वसन्तर्तुपक्षे कमलमधुमधुरैः समीरणैः वायुभिः । नृपलोकपक्षे अम्बुजैः अधिवासार्थं क्षिप्तैः स्फुरत् मधु मद्यं सपीत्यां सामन्तैस्सुहृद्भिस्सह समास्वादितं तन्मधुरीकृतैः समीरणैः प्रोत्साहनैः ।

कुरुविन्दहरिन्मणिस्फुर-
न्नवभूषा मधुनेव लम्भिताः ॥ ११५ ॥

विदधौ नवपल्लवावली-
विलसत्कुङ्कुमपङ्कलेपना ।
दयिते वनभूवधूर्मधा-
वलिदम्भेन कटाक्षधोरणीम् ॥ ११६ ॥

नवपल्लवकैतवस्फुटी-
कृतरागास्सुमनस्समृद्धिभिः ।
उपभोक्तुमना लतावधूः
[1]प्रतिसीराभिरिव प्यधान्मधुः ॥ ११७ ॥

समधून्मधुरम्बुजव्रजान्
परिखिन्नालिपरिश्रमापहान् ।
भृतमाधवधर्मकौतुका
जलकुम्भानिव पङ्कजाकराः[2] ॥ ११८ ॥

प्रतिभटधरणीभृन्मण्डलोदारकीर्ति-
प्रकरविमलतूलप्रौढवह्निप्रतापः ।

---

1. प्रतिसीरा तिरस्करिणी पुष्पमयीभिस्तिरस्करिणीभिः प्यधात् संवव्रे । 2. पद्माकरा समधून् मधुपृक्तान् अम्बुजव्रजान् जलकुंभानिव अधुः । परिखिन्ना अलयो भृङ्गाः, परिखिन्नानामालिः समूहः । भृतमाधवधर्मकौतुका मधुसंबन्धिमङ्गलोत्सवकारिणः ।

प्रभुरुपहरमाणः फल्गुन[1]प्रत्यभिज्ञां
समजनि मृगयायां साभिलाषस्तदानीम् ॥ ११० ॥

पश्यत्पादनयादिमाखिलनयस्वातन्त्र्यमव्याहतं
धर्मिग्राहकमानसिद्धममृतस्फीताश्च यत्सूक्तयः ।
तस्य श्रीधरवेङ्कटेशसुधियो लिङ्गार्यसूनोः कृतौ
श्रीशाहेन्द्रविलासकाव्यतिलके सर्गो द्वितीयोऽजनि ॥

॥ इति श्रीश्रीधरवेङ्कटेशकृते श्रीशाहेन्द्रविलासे द्वितीयस्सर्गः ॥

---

## ॥ तृतीयस्सर्गः ॥

—:o:—

अथ क्षमापालमणेर्निदेशना-
दनीकिनी सन्नहनोत्तरङ्गिता ।
नभोभिदा भूरिगभीरभेरिका-
स्वनेन यात्रारभटीमटीकत ॥ १ ॥

परम्पराभिर्बहिरागि भासुर-
प्रसाधनोत्तुङ्गहयाधिरोहिणाम् ।
समुत्कटोत्कण्ठमकुण्ठविक्रम-
प्रभाभिरन्तर्भ्रमति क्षितिक्षिति[2] ॥ २ ॥

---

1. अर्जुन · 2. राजनि

ततोऽनुजीविप्रवरेण वर्तितं[1]
पुरो गरुत्मन्मदरोधकस्यदम् ।
परं तुरङ्गं शरदिन्दुसुन्दरं
समभ्यरुक्षत क्षितिमण्डलेश्वरः ॥ ३ ॥

वृतोऽनुरूपः पतिरेतयाधुने-
त्यतीव हर्षादवनौ मुहुर्मुहुः ।
समुन्मिषत्फेनकदम्बकैतवा-
दुदारमुक्तामणिवर्षकारिणम् ॥ ४ ॥

धुमेन्धवो[2] वालजितः कियान् मया
पयःपयोधिर्जनकोऽस्य सृज्यते ।
दधानमुच्चैरिति फेनमण्डल-
च्छलादुपादानमदस्समाश्रयम् ॥ ५ ॥

अधःकरोति स्म वियद्गतिः[3] स्वयं
हरिर्यमुच्चैःश्रवसं रसं मम ।

1. पुरः आनीय स्थापितम् । 2. देवाश्व उच्चैःश्रवाः । वालधिना जितः । उच्चैःश्रवाः कियान्मे ? तस्य जनकः पयःपयोधिः क्षीराब्धिरेव मया सृज्यते इतीव अदःसमाश्रयम् तत्क्षीराब्धिसंबद्धमुपादानकारणं फेनमण्डलच्छलाद्धारयतीत्युत्प्रेक्षा । 3. Ms ति । 'गतिष्वयम्' इति पाठः स्यात् ।

तमाहुरीदृक्षसमानकक्ष्यता
बतागतेतीव नमन्मुखं ह्रिया[1] ॥ ६ ॥

न रुध्यतां मित्रतुरङ्गपद्धति-
स्तदा तदाभ्युन्नमनक्रमेष्विति ।
पुरःपदे चाटुवचोविधित्सया
निजे परिद्रष्टुमिवानमन्मुखम्[2] ॥ ७ ॥

मुहुः करालैः खुरकोटिकुट्टनै-
स्तरङ्गिताभिः कुरुविन्दकुट्टिमे ।
स्फुरत्प्रभाभिर्मणिभङ्गपालिभि-
रममर्थितार्थिव्रजदैन्यनिह्नवम्[3] ॥ ८ ॥

स्ववर्ष्मणस्तत्कुरुविन्दमन्दित-
स्फुरत्परिष्कारगणस्य चांशुभिः ।

---

1. शाहेन्द्राश्वस्य स्वाभाविकाधोमुखतायाः ह्रियेव नमन्मुखमिति हेतूत्प्रेक्षा । वियद्गतिः हरिः इन्द्रः यमुच्चैःश्रवसं स्वयमधःकरोति स्म तिरश्चकार । विरोधपरिहारे तु अधःकरोति स्म आरुरोहेत्यर्थः । तं तादृक्षमुच्चैःश्रवसं मम सममाहुः । बत अहो ईदृक्षसमानकक्ष्यता ममागतेति ह्रियेव नमन्मुखम् ।

2. स्वपुरोवर्तिपादयुगेन संभाषमाणमिवावनमन्मुखम् । संभाषणप्रकारश्च मा तावद्युवयोरुत्प्लुत्या सूर्याश्वगतिः निरुध्यतामिति ॥

3. कुरुविन्दकुट्टिमात् स्वखुरकोटिकुट्टनविपाटितात् विशीर्णैः कुरुविन्दरत्नशकलपरंपराभिरपहृताभ्युपगतार्थिजनदारिद्र्यदैन्यम् ।

हिमांशुतिग्मांशुमरीचिमेलनं
नवं सृजन्तं जनलोचनोत्सवम्[1] ॥ ९ ॥

परार्व[2]गर्वौघविदारधोरणी-
समर्जितोर्जस्वलकेतुधीसृजा ।
समुन्नतेनामलहेमशोभिना
शिरःपरिष्कारवरेण सुन्दरम् ॥ १० ॥

दिशन्नुदारां घनसारवीटिका-
मुपास्त कश्चिद्वसुधासुधानिधिम् ।
दधत्कलाची[3]मितरः परोऽनिलं
सृजन्मयूरच्छदतालवृन्तजम् ॥ ११ ॥

प्रतप्तजाम्बूनददण्डमण्डितं
परस्सितच्छत्रमधत्त भूपतेः ।
तदोजसार्को विजितः प्रसिद्धये
यदग्रबद्धो मणिकुम्भ[4]दम्भतः ॥ १२ ॥

सितातपत्रोदरहेमकन्द[5]भ-
स्पृशा पतन्त्या शिरसि क्षमापतिः ।
दुकूलवल्या नवदुग्धधारया
सुवर्णकुम्भस्नुतयेव पर्यभात् ॥ १३ ॥

---

1. स्वयष्मं स्वशरीरं श्वेतम् चन्द्रेणोपमितम् । सन्दितः बद्धः । परिष्कारः मण्डनाविशेषः । एष च सूर्येणोपमितः ॥ 2. अर्वा अश्वः । 3 कलाची पात्रविशेषः । 4. छत्रोपरिवर्ती कलशः ।
5. आतपत्रान्तः मध्यवर्ती कन्दाकृतिरवयवविशेषः ।

सरस्वती स्वप्रभुसुन्दरी त्वम-
त्यमुं समेत्येति मुदा समागतम् ।
जनो मरालं समभावयद्विभोः
प्रकीर्णकं[1] पार्श्वगपाणिकम्पितम् ॥ १४ ॥

कराग्रसक्ताञ्चलमिन्दुनिर्मलं
परो दुकूलं समुदक्षिपन्मुहुः ।
प्रभोः पुरस्ताद् द्युवनीगतारुण-
स्फुरत्फलादानकुतूहलादिव[2] ॥ १५ ॥

महीन्द्रसन्दोहमहोनिबर्हण-
प्रपञ्चनोदञ्चितमस्य निस्तुलम् ।
यशः स्तुवन्तः शुभवाङ्मयैरमुं
समस्तुवन् वन्दिवरा धराधिपम् ॥ १६ ॥

भटच्छटाभिः स्फुटवेत्रपाणिभि-
र्विवेचिते वर्त्मनि कातरेतरैः ।
तदा मनोभिर्वरवारसुभ्रुवः
प्रभोरनृत्यन् पुरतो मनोहरम् ॥ १७ ॥

प्रभोर्मनो हर्तुममूस्समुत्सुका
विलासभङ्गीषु तरङ्गितोद्यमाः ।
अमुष्य वक्त्राब्जनिविष्टदृष्टयो
न ताम्रविन्दन्ततरां प्रगल्भताम् ॥ १८ ॥

1. चामरम् । 2. देवोद्यानगतसूर्यरूपफलादानकुतूहलादिव ।

तदा ततानद्धनिनादधोरणी
गभीरिमालिङ्गितमाधुरीभरा ।
अधृष्यतामार्जवमप्युपाश्रिता
नृपालशैलीव तदानशे दिशः[1]॥ १९ ॥

विलासिनीनर्तनविभ्रमानुगैः
क्रमैः[2]मनोहारिभिरीरितुर्हयः ।
व्यधत्त वल्गत्खुरमुद्रया धरां
विराजदर्धेन्दुविशेषकामिव ॥ २० ॥

करान्तसङ्क्रान्तखलीनलीलया
निगाल[3]संस्फालनशीलनैरपि ।
निजाङ्घ्रिसङ्घट्टनया व्यजीगमत्
तमर्व[4]चूडामणिमुर्वरेश्वर[5]: ॥ २१ ॥

द्रुतं निगृह्णन् समदं पुरः पदो-
न्नमन्तमर्वन्तमिति स्मयोद्धतम् ।
विनम्रयामीति विबोधयन्नयं[6]
बहिश्चभूमिर्मिलति स पार्थिवः ॥ २२ ॥

---

1. ततं वीणादिकम् । आनद्धं मुरजादिकं वाद्यम् ; तन्निनाद-धोरणी गभीरा मधुरा च सती अधृष्या आर्जवयुता नृपशैली-वेत्युपमा । यथाह कालिदासः 'अधृष्यश्चाभिगम्यश्च' इति ॥
2. क्रमैः पदक्रमैः 3 निगालो गलोद्देशः । 4. अर्वा अश्वः । 5. उर्वरा भूमिः । 6. समदं पुरः पदा उन्नमन्तमुच्चैर्वल्गन्तमर्वन्तं निजादवं द्रुतं निगृह्णन् इति एवंप्रकारेण स्मयोद्धतं गर्वोद्रिक्तं नृपं विनम्रयामि निगृह्य प्रवणयिष्यामीति विबोधयन्निवेत्युत्प्रेक्षा ।

त्रिलोक्य तं तत्पदपद्मभूषणाः
स्वमौळयोऽमी इति बोधिकां नतिम् ।
अतन्वताह्नाय हयस्थिता नृपाः
शिरःस्फुरत्पाणिसरोजकोरकाः[1] ॥ २३ ॥

स हारवल्लीमिव नायको मणि-
स्तुषारधामोडुपरम्परामिव ।
वदान्यभावो गुणिमण्डलीमिव
प्रकाशयन्नश्वचमूमगान्नृपः ॥ २४ ॥

स बृंहितैर्हेषितरूषितैरदः-
प्रसादितैः घर्घरनिस्वनैरपि[2] ।
हयद्विपस्यन्दनवृन्दसुन्दर-
श्चमूसमूहः क्षितिपालमन्वगात् ॥ २५ ॥

प्रयाति भूनेतरि भूरिभेरिका-
स्वनेन सञ्चुम्बितमम्बरश्रियः ।

1. तत्पदपद्मं शाहनृपांघ्रिपद्मं तदेव भूषणं शेखरः येषां ते । अमी स्वमौलयः सामन्तराजमौलयः । शिरोनिहिताञ्जलिहस्तबन्धानां पद्मकोशसारूप्यात् शाहेन्द्रपदपद्ममेव स्वमौलिभूषणमिति बोधयन्त इव नतिमह्नाय द्रागतन्वत । 2. बृंहितं द्विपशब्दः । तद्रूषितं हेषितं हयशब्दः । अदःप्रसादितः । तन्मिश्रः घर्घरनिस्वनः स्यन्दनशब्दः । 'हयद्विप' इति उपरि दृश्यमानत्वात् 'सहेषितैर्बृंहित' इति पाठे प्रक्रमभङ्गो वारितः स्यात् ।

मुखं, दिशाया हृदयं च रञ्जितं
धरोपभुक्तोरगभूश्च लालिता[1] ॥ २६ ॥

अरं निरुन्धन्ति हयाः पयोनिधिं
विधिप्रणीतं खुरधूलिपालिभिः ।
इतीव मत्सरमुदन्वदन्तरं
व्यतन्वताशु द्विरदा मदाम्बुभिः ॥ २७ ॥

तुषारनीरोत्करणार्द्रि[2]तस्थलां
स्फुरन्मणीतोरणचुम्बिताम्बराम् ।
अगच्छदच्छालय[3]जालशोभितां
निजां स तञ्जानगरीं[4] विलोकयन् ॥ २८ ॥

अनाविलैरश्मभिरिन्द्रवैरधि-
ष्ठिता यदीया नवसौधवीथिकाः ।
अभिस्पृशन्तीव कुमुद्वतीपतिं
निजानुबन्धप्रकटीचिकीर्षया ॥ २९ ॥

करोति यत्कुञ्जरराजिरोजसा-
मरावतीमालविलोलनं करैः ।

1. भेरीस्वनस्य ऊर्ध्वाधोलोकव्याप्तत्वं विश्वक्षेमावहत्वं च वर्ण्यते । धरा भूमिरुपभुक्ता । उरगभूः पाताललोकः ॥ 2. उत्करणं सेचनार्थं विक्षेपः । 3. आलयाः देवालयाः । 4. तुषारजलपातेन मेघप्रतीतेः मणितोरणेन इन्द्रचापप्रतीतेः आलयैः देवाश्रयप्रतीतेः तञ्जापुर्या द्युलोकौपम्यप्रतीतिः ।

वलारिमद्रिद्रुहमावहत्यसा-
विति क्रुधेव क्षितिभृत्परम्परा[1] ॥ ३० ॥

सितांशुबिम्बे मितमारमभ्रमाद्
गजस्य यस्यां[2] करकर्पणोत्थिते ।
व्रणे प्रशान्ते वपुषि स्फुटं किणं
कलङ्कमस्मिन् नियतं प्रचक्षते ॥ ३१ ॥

यदीयचन्द्रोपलहर्म्यसन्ततौ
नभःस्पृशि व्योमनदीति शङ्कया ।
उपागताः क्रीडितुमुत्सुका भृशं
प्रभान्ति देवप्रमदा इव स्त्रियः ॥ ३२ ॥

समुज्ज्वलेन्दूपलसालजालकं
कुमुद्वतीकान्तकुतूहलादिव ।
तरङ्गदोर्भिः परिरब्धुमीहते
पयोनिधिर्यत्परिखाकृतिं वहन् ॥ ३३ ॥

द्रुतेऽखिले ग्रावकुले यदुन्मिष-
त्तलोदरीगानतरङ्गितामृतैः ।
किमिन्दुकान्ते किरणप्रसर्पणे-
र्भमेति दीनो विधुरेति पाण्डुताम् ॥ ३४ ॥

---

1. कुञ्जरागाजिरेव क्षितिभृत्परंपरा, वलारिरिन्द्रः क्षितिभृ द्द्वेषी, तमावहत्यसौ इति क्रुधामरावतीसालविलोलनं करोतीव ।
2. यस्यां तञ्जानगर्याम् ।

यदीयरत्नाञ्चितसौधमण्डली-
  शिरस्सु राजन्नरविन्दबान्धवः ।
तदुन्मिषत्काञ्चनकुम्भगुम्भतो
  जनैर्विभिन्नः क्रिययावधार्यते ॥ ३५ ॥

यदीयसौधेषु विभाति चन्द्रम
  स्यनारतालम्बितदर्पणभ्रमात् ।
निजाननालोकनकौतुकाः स्त्रियो
  गतेऽन्यतोऽस्मिन् कलयन्ति विस्मयम् ॥ ३६ ॥

पुरा विधायामरसुन्दरीजनं
  वराङ्गनासृष्टिषु लब्धपाटवः ।
पयोजयोनिः प्रणिधाय मानसं
  व्यधत्त यस्यामरविन्दलोचनाः ॥ ३७ ॥

शनैर्हरन् निर्जरयोषितां रति-
  क्रमानदःक्लामितनेरुपक्रियाम् ।
करोति यत्सौधकदम्बकोल्लस-
  त्पताकिकालोलपटाञ्चलानिलः ॥ ३८ ॥

ततः क्रमादुत्कलिकोत्तरङ्गितै-
  श्चमूसमूहैस्सह साहसोत्थितैः ।
तमालतक्कोलरसालमालयं-
  कुलं व्यलोकिष्ट वनं जनेश्वरः ॥ ३९ ॥

मरन्दनिष्यन्दशकुन्तसन्तति-
स्वनप्रसूनप्रकरच्छलान्नगाः[1] ।
पदोदकस्वागतभाषितस्मिता-
न्यतन्वत क्षोणिपतेरुपागमे ॥ ४० ॥

अथो समुत्कण्ठितचित्तवृत्तयः
किरातवर्गा धरणीपतेः पुरः ।
उपाहरन्निस्तुलवन्यवस्तुसं-
ततीरवन्दन्त च दूरवर्तिनः ॥ ४१ ॥

न्यवेश्यत क्वापि चमूः क्षितिक्षिता[2]
व्यगाह्यतान्तर्मृगयोचितस्समम् ।
अदृश्यतारण्यतले दुरासदा
वराहशार्दूलतरक्षुसन्ततिस्ततः ॥ ४२ ॥

न्ययुञ्जत श्वग्रहकर्मठाश्शुनो
व्यसारयन् वागुरिकाश्च वागुराः ।
गुणौघनिर्याणशलाकिकाः[3]परे
व्यतन्वतान्येऽस्फुटयन्मृगादनान्[4] ॥ ४३ ॥

खगा मृगा वा गुणवागुरादिभि-
र्न यावदासन् परिशीलिता वने ।

1. नगा वृक्षाः । मरन्दनिष्यन्देन पाद्यं, शकुन्तस्वनैः स्वागतं, प्रसूनैः स्मितमिति यथासंख्यम् । 2. राज्ञा । 3 जालबद्धयष्टीः । 4. तरक्षून् ।

नृपस्य तावन्महसां समुच्चयै-
निर्तान्तमासन्नवसन्नविक्रमाः ॥ ४४ ॥

करालसत्त्वाः किल यावदुच्चकैः
पराक्रमोपक्रमणं न संव्यधुः ।
कदर्थितास्तावदुपेत्य मर्मणि
प्रदश्य शश्वन्मृगयाश्वभिर्वने ॥ ४५ ॥

न यावदेक्षिष्ट न चालविष्ट[1] वा
तरक्षुरक्षुद्रजवस्तदीक्षिणः[2] ।
हताजसस्तावदितस्ततो मृगा
बभूवुरास्पन्दितुमप्यनीश्वराः ॥ ४६ ॥

प्रवेशनं स्वैरितया मृगव्रजाः
प्रपेदिरे केऽप्यधिवागुरोदरम् ।
परे तदासक्तिभरेण[3] चापरे
किरातसंघातनवातिसन्धिना[4] ॥ ४७ ॥

स लक्षयन् दूरचरान् पतत्रिणः
कुतूहली श्येनवरं नरेश्वरः ।

1. अलविष्ट अच्छिनत्। कोशे 'अवलिप्ट' इति पाठो दृश्यते । 2. तदीक्षिणः तरक्षुदर्शिनः । मृगाः क्षुद्रमृगाः । तरक्षुदर्शनमात्रात्क्षुद्रमृगाणां भयातिरेकान्निष्पन्दता। 3. अनुस्यूततया ग्रहणप्रयोगेण । 4. किरातवर्गैः प्रयुज्यमानेन नवनवेन वञ्चनाप्रकारेण ।

उदक्षिपन्मुष्टिनिविष्टपक्षतिं
यथोचितादेशविचक्षणो हि सः ॥ ४८ ॥

चरन्नधोऽधः स्वमकारि दारुण-
प्रडीनभेदैरितरः खगोत्करः ।
अनायि च श्येनवरेण वश्यता-
मपाति चण्डैः पदतुण्डकुट्टनैः ॥ ४९ ॥

प्रभोः करो डायमयाद्यतोयतः[1]
ततस्ततश्श्येनवरः पतत्रिषु ।
न जातुचिन्मोघमभुद्रमोऽभव-
न्महीपतेः क्रोध इवास्य वैरिषु ॥ ५० ॥

प्रभोः करः पक्षविमर्शलालनै-
र्मुदं द्विजं तं प्रतरामनीनयत् ।
सपक्षपातं[2] विपुलोपलालनं
द्विजे[3] निजं शीलममुष्य विश्रुतम् ॥ ५१ ॥

ततश्शशामप्रवरं दुरासदं
करे वहन् टङ्करणैर्भयङ्करैः ।

---

1. प्रभुकरः यतोयतो डायम् अयात् उड्डयनार्थं धूननेन संज्ञां ददौ । 2. पक्षपातः पक्षिणः पक्षतिनमनोन्नमनम्, अन्यत्र स्नेहः । 3. पक्षी ब्राह्मणश्च ।

वनं स वाचालयति स्म मन्मथं
मृगव्रजं चालयति स्म पार्थिवः ॥ ५२ ॥

धनुर्निनादेन महाभवत्पुरः
क्रुधा वराहोऽग्य मुखे नृपेषुणा ।
तथैव दंष्ट्रान्तरधीरधीयत
न्यमज्जि तद्वीक्ष्य जनेन विस्मये ॥ ५३ ॥

शरेण दुर्धर्षतयेण भूपते-
स्स विक्रमी पोत्रिवरोऽपसर्पितः ।
रुषापतन्मत्तनृपो विषाणयो-
र्हठान्निगृह्येव बलीयसाजनि[1] ॥ ५४ ॥

नृपस्य बाणेन निपातितः क्षितौ
परिस्रुतासृक्प्रकरारुणाङ्ककः ।
बभार पोत्री मृगयाजयश्रियो
ध्रुवं विलासानुगुणोपधानताम् ॥ ५५ ॥

मदोद्धतं द्वीपि[2]वरं नरेश्वर-
श्चरन्तमालोक्य धनुर्ध्वनिं घनम् ।
व्यधत्त येनाशु मनो मृगावलेः
स्फुटं विपुस्फोट मुखं दिशामपि ॥ ५६ ॥

धनुस्स्वनेनापतितः कृतक्रुधः
क्षमापतिर्व्याघ्रवरस्य सत्वरम् ।

---

1. स पोत्री वराहो यथा रुषा आपतन् मत्तनृपः केनापि बलीयसा द्वयोर्विषाणयोर्हठान्निगृह्य अपसर्पितः क्षिप्तस्स्यात् तथा अपसर्पितः अजनि बभूव । 2. द्वीपी व्याघ्रः ।

अपूरयत्तीक्ष्णशिलीमुखैर्मुखं
मनोऽर्थिनो वस्तुभिरीप्सितैरिव ॥ ५७ ॥

तथापि रोषादभिपातुकं स तं
पदं पदादप्यचलन्महीपतिः ।
विभिद्य सद्यः परुषासिधारया
न्यपीपतत्तन्महसः किमद्भुतम् ॥ ५८ ॥

ततः क्षमापालवरेण कार्मुक-
प्रणादमेदस्विनि काननोदरे ।
अदर्शि सिंहः प्रतिसिंहनिध्वनि-
भ्रमाद्भ्रमद्धुङ्कृतिभिन्नदिक्तटः ॥ ५९ ॥

अयं महौजा इति संहता भटा-
स्समंहमस्मिंह्यमथाभ्ययासिषुः ।
अमूनशेषानपवार्य धैर्यवा-
नवर्ततात्रे नृपतिर्धनुर्धरः ॥ ६० ॥

स भूभुजा सन्निधिमेतुमक्षमो
व्यधीयताविच्छिदयेषुधारया ।
तथा निरुद्धेऽपि गतिस्यदे[1] तया
न कोपवेगश्शमितो मृगेशितुः ॥ ६१ ॥

निहत्य तं बाणवरैः स्फुरन्नृपः
श्रितः प्रतापैर्दुरवेक्षतामपि ।

---

1. गतिवेगे ।

दृशा समन्दस्मितयानुजीविनां
मनोऽधिनोच्चन्द्रिकयेव चन्द्रमाः ॥ ६२ ॥

निशम्य शब्दं विसृजन् शिलीमुखान्
मृगेष्वमोघं दृगनास्पदेष्वपि ।
प्रभुस्समस्मारयदर्जुनादिमान्
स शब्दवेधिप्रमुखेषु पण्डितः ॥ ६३ ॥

परामृशन्नूर्जितमार्जवं प्रभो-
र्महःकृशानप्यतिशक्रविक्रमान् ।
जनस्समाधत्त पदोपसर्पणं
विशङ्कतां कातरताञ्च संश्रितः ॥ ६४ ॥

उच्चावचं धुरि चरत्स्वपि निर्भयेषु
कस्तूरिकादिकमनीयगुणाश्रयेषु ।
आसीन्मृगेषु नृपतिः प्रणयार्द्रचित्त-
स्तस्य प्रभोर्हि सहजो गुणपक्षपातः ॥ ६५ ॥

अथ [1]सङ्कुमदादिमाकराणां
जनिभाजां[2] प्रकरं किरातवर्गाः ।
गुरुवागुरिकादियत्नलब्धा-
नवनीभर्तुरुपाहरन् समीपे ॥ ६६ ॥

---

1. संकुमदः मृगविशेषयोनिः गन्धविशेषः । 'सांकव' इति आनन्दरङ्गचम्वामपि १७३ पृष्ठे दृश्यते । 2. जन्तूनाम् ।

कोदण्डधामहतचण्डमृगप्रकाण्ड-
च्छायासु मेदिनि[2]रुहां परिवारवर्गैः ।
हृद्यैर्हृतश्रमभरश्शिशिरोपचारैः
प्रातिष्ठत प्रतिपुरं नृपतिश्चमूभिः ॥ ६७ ॥

पश्यत्पादनयादिमाखिलनयस्वातन्त्र्यमव्याहतं
धर्मिग्राहकमानसिद्धममृतस्फीताश्च यस्योक्तयः ।
तस्य श्रीधरवेङ्कटेशसुधियो लिङ्गार्यसूनोः कृतौ
श्रीशाहेन्द्रविलासकाव्यतिलके सर्गस्तृतीयोऽजनि ॥

इति श्रीश्रीधरवेङ्कटेशकृते शाहेन्द्रविलासे तृतीयस्सर्गः ।

---

2. 'ईकारान्ता इकारान्ताः' इति न्यायेन ।

## ॥ चतुर्थस्सर्गः ॥

---

शाहभूवर[1]तुरङ्गखुरोद्य-
द्धूलिपालिमलिनीकृतमूर्तिः ।
स्नातुकाम इव पङ्कजबन्धुः
पश्चिमाम्बुधितटीमथ भेजे ॥ १ ॥

मृष्टवान् कुमुदिनीं द्विराज[2]-
प्रेयसीमघशमाय विधित्सुः ।
आप्लवं वसुततेश्च विसर्ग[3]
भानुराप सविधं चरमाब्धेः ॥ २ ॥

अन्धकारविसरा इह लीनाः
कन्दरास्विति रुषा निजिघृक्षुः ।
तान्विचेतुमिव पङ्कजबन्धुः
पश्चिमक्षितिभृतस्तटमाप ॥ ३ ॥

पद्मरागमणिसुन्दरनिष्कः
कोऽपि पश्चिमहरित्तरलाक्ष्याः ।
सन्ध्ययेव निहितः परिणम्रः
शोभते स्म बिम्बिनी[4]पतिबिम्बः ॥ ४ ॥

---

1. भू-वरो भूभर्ता । 2. 'चन्द्रः' ब्राह्मणश्रेष्ठश्च । 3. आप्लवं स्नानं वसुततेः किरणावलेः धननिचयस्य च विसर्गम् , स्नानदानयोः प्रायश्चित्तरूपत्वात् । 4. बिम्बिनी सरोजिनी ।

सालजालकदलान्तरलग्नै-
स्सायमर्ककिरणैः प्रतिलेभे ।
धावनाकुलपतङ्गशताङ्ग[1]-
स्रस्तहेमकणिकागणकेलिः ॥ ५ ॥

पीतवानपरिशीलितशंकं
वारि भूरितरमह्नि करेण ।
अन्वभूदहह दीपनमान्द्यं
पद्मिनीपतिरहःपरिणामे ॥ ६ ॥

विप्रयोगभयविक्लबिताया-
श्चक्रवाकयुवतेश्चरणान्ते ।
आननाद्बिसलतापतदार्ति-
स्सह्यतामियमिति ब्रुवतीव[2] ॥ ७ ॥

मञ्जुशिञ्जितकरे वरुणाशां
रञ्जयत्यहिमधामनि नाथे ।
म्लायति स्म भृशमम्बुरुहिण्याः
पद्मचारुवदनं बत सद्यः ॥ ८ ॥

आगतामगणयन्नवसत्तिं[3]
पङ्कजस्य जठरे मधुलिप्सुः ।

1. शताङ्गो रथः । 2. चक्रवाक्या मुखात् बिसलता 'इयं तव वियोगार्तिः सह्यताम्' इति ब्रुवतीव सती पादान्ते अपतत् । 3. अवसादम्; सूर्यापगमनात् पंकजस्य प्राप्तम् ।

आविवेश मधुपो मलिनात्मा
  स्वार्थकृन्न सुहृदार्तिविमर्शी ॥ ९ ॥

प्रेक्ष्य पश्चिमपयोधिपिचण्डे[1]
  चण्डभानुमचिरेण मिमङ्क्षुम्[2] ।
विप्रयोगविपदम्बुधिमग्नं
  कोकमण्डलममन्यत लोकः ॥ १० ॥

केलिकावसरसन्निधिहर्षा-
  दुन्मिषद्द्युतिमुखं कुलवध्वाः ।
उल्ललास कमलं तु सपत्नो[3]-
  न्मेषखिन्नमिव निष्प्रभमासीत् ॥ ११ ॥

अर्धसन्निधि[4]मवाप्य विविक्ते
  दम्पती गुरुवशंवदवृत्ती ।
भ्रूलतोदितपरस्परभावा-
  वुत्सुकौ रजनिकेलिभिरास्ताम् ॥ १२ ॥

आननेषु मृदुळं ग्रसनीयं[5]
  वत्सवत्सलतयाभिवहन्तः ।
व्यापृता निजवधूस्त्वरयन्तः
  स्वस्वनीडमभजन्त शकुन्ताः ॥ १३ ॥

---

1. उदरे । 2. मज्जनेच्छुम् । 3. सपत्नं तु कुलवधूमुखम् ।
4. अपूर्णं परस्परसांमुख्यम् । Ms. आर्ध । 5. भोज्यवस्तु ।

लम्भितां कमलसुन्दरचक्षु-
मीलनं रविरहःपरिणत्या ।
पद्मिनीमिव विमोहयितुं द्राक्
पश्चिमाब्धिजठरे परिलिल्ये[1] ॥ १४ ॥

आरचय्य दिवसं परिभोगं[2]
वल्लभे दिनमणावपयाते ।
अब्जिनीश्रमवशादिव निद्रा-
मञ्चति स्म मधुघर्मकणाङ्का[3] ॥ १५ ॥

चण्डधाम्नि विरते समुदीतं
मुक्तबन्धमिव[4] वस्तुसमूहान् ।
तत्रतत्र तिमिरं परिवव्रे
वारवाणमिव मेचकमेकम्[5] ॥ १६ ॥

नीतमुष्णमहसा वितमस्त्वं
नेष्यमाणमभिकेन रजन्याः[6] ।
वर्त्म भूपतिबलौघविभूषा-
दीधितिर्वितिमिरीकुरुते स्म[7] ॥ १७ ॥

---

1. अनेन रविपद्मिन्योः निमीलनकेलिर्वर्ण्यते । 2. सर्वं-दिवसं भुक्त्वा । 3. मधुबिन्दुरूपस्वेदकणाङ्किता । 4. बन्धनान्मुक्तमिव, तथा द्रागापतद् इति भावः । 5. किमपि बृहत् नीलं कञ्चुकमिव । 6. रजनीकामुकेन चन्द्रेण । 7. सूर्यास्तंगमनानन्तरं चन्द्रोदयाच्च प्राक् यत् राजवर्त्मनि तिमिरमासीत् तत् राजभटानामाभरणतेजसा निरस्तम् ।

दिक्तटानि धरणीं गगनं यत्
सन्ननाह नितरामपिधातुम्[1] ।
तत्तमो न जगति प्रजगल्भे
शाहराजमहसा परिभूतम् ॥ १८ ॥

अप्रसन्नवदनाम्बुरुहाया-
स्सन्निधानमपहाय नलिन्याः ।
स्मेरया मधुकरः कुमुदिन्या
चारु हूत इव तामभिपेदे ॥ १९ ॥

बिभ्रतो धुरि विनिर्मलचन्द्र-
ज्योतिरुन्मिषितदीपकलापान्[2] ।
आश्रयन्त धरणीपुरुहूतं
सेवका जयवचोऽभिदधानाः ॥ २० ॥

भूवरस्य धुरि दीपसहस्र-
ज्योतिरुच्चयमुदीक्ष्य जनेन ।
तिग्मतेजसि मयूखसहस्रो-
न्मीलिते न समलक्षि विशेषः[3] ॥ २१ ॥

राजमौलिमणिराजिविराज-
त्पादपद्म विजयस्व दयस्व ।
इत्युदग्रितगिरः प्रभुवर्गाः
पर्युपासत नृपालवतंसम् ॥ २२ ॥

1. अपिधातुं तिरयितुम् । 2. चन्द्राभान् दीपान् ।
3. दीपसहस्रकरसहस्रसाम्यात् नृपसूर्ययोर्विशेषो जनेन न समलक्षि ।

स प्रभुर्गिरिसुतासखदेव[1]-
श्रीमदङ्घ्रिकमलालिमनस्कः ।
ऐक्षतोपनगरं गिरिजामा-
नन्दवल्लिमपि तत्पतिमीशम्[2] ॥ २३ ॥

भूपतिः कृतनमस्कृतिरस्या
भूभृदीशदुहितुश्च शिवस्य ।
सन्नुतिं समतनोदिति चारु
स्फारभक्त्यमृतपूरगभीराम् ॥ २४ ॥

॥ आनन्दवल्लीस्तुतिः ॥

विश्वमिन्दुधरसुन्दरि कर्तुं
भर्तुमेतदपहर्तुमपि त्वम् ।
ईशिषे ननु दयस्व जनन्या-
नन्दवल्लि नतकल्पकवल्लि ॥ २५ ॥

त्वत्पदाब्जशरणा विधिमुख्या
विश्रुतास्तव निदेशत एव ।
वाति वायुरपि वासरनेतो-
देति भाति शुचिरेष[3] उदर्चिः ॥ २६ ॥

यन्मतङ्गजतुरङ्गशताङ्ग-
श्रेणितुङ्गविभवा भुवि केऽपि ।

---

1. शिव- । 2. तञ्जानगरोत्तरसीम्नि वेण्णारनदीतटे आनन्दवल्ल्यम्बिकयाः तत्पतेरीशस्य चालयो वर्तते । 3. अग्निः

ईशते हरिमुखा हरितां यत्
तत्त्वदीयकरुणापरमाणोः[1] ॥ २७ ॥

सम्पदः पद्मनने तनुते ते
देवि कापि कणिका करुणायाः ।
याश्चिरादपि गुरोश्चहणीया[2]
देवभर्तु[3]रपि याः स्पृहणीयाः ॥ २८ ॥

उद्यदम्बुरुहिणीविट[4]बिम्ब-
श्रीसखं[5] जननि मञ्जुवपुस्ते ।
यस्स्मरत्यनुसरन्ति नरं तं
मन्मथार्तिविधुरा मदिराक्ष्यः ॥ २९ ॥

पुस्तकाक्षवलयाद्यभिरामां
त्वां भजन् भवति देवि भवानि ।
ऊर्मिलामृतझरीपरिवाह-
स्फारगीरमलसम्पदरीणः[6] ॥ ३० ॥

चापबाणसृणिपाशधुरीणां
त्वां भजन् नवकुसुम्भमयूखाम् ।
एधते भुवि पयोधिपरीत-
क्ष्मापतिस्सति दयम्ब नमस्ते[7] ॥ ३१ ॥

---

1. हेतौ पञ्चमी । 2. विद्यारूपास्संपदः । 3. इन्द्रस्यापि अत्र लक्ष्मीरूपाः संपदः । 4. सूर्य- । 5. रक्तवर्णम् । 6. पूर्णः 7. श्लो. २९-३१ : एवं देव्यास्त्रिविधमूर्तिध्यानात् त्रिविधफलसिद्धिः आर्याद्विशती - देवीपञ्चस्तव्यादिषु ग्रन्थेषु स्मृता ।

॥ श्रीतञ्जेश्वरस्तुतिः[1] ॥

अस्तु ते नतिरियं शशिमौले
निस्तुलं हृदि विभातु मदीये ।
स्कन्दशैलतनयासखमीशा-
नन्दवल्यधिपते तव रूपम् ॥ ३२ ॥

स्थास्नुजङ्गमगणेषु भवान्त-
र्यामिभावमवलम्ब्य समस्तम् ।
निर्वहन् विहरसे तव को वा
वैभवं प्रभवतु प्रतिपत्तुम् ॥ ३३ ॥

विश्रुता भुवननिर्मितिपोष-
प्लोषण[2]प्रतिभुवस्त्वयि तिस्रः ।
मूर्तयः स्मरहराविरभूवन्
निस्समं त्वमसि धाम तुरीयम् ॥ ३४ ॥

सुन्दरेण शशिकन्दलमौले
तावकेन पदतामरसेन ।
कृत्रिमेतरगिरः[3] कुतुकिन्यः
कुर्वते सुरभिलं कुरलं[4] स्वम् ॥ ३५ ॥

---

1. 'तञ्जपुरीश' इत्यानन्दवल्लीपतेरीश्वरस्य नाम ।
2. सृष्टि-स्थिति-संहार- । 3. अपौरुषेयवाचो वेदरूपाः ।
4. शिखाम् ; अन्तिमभागं वेदान्तरूपम् ।

ईशतामविदितावधिगन्धां
  प्रव्यनक्ति परमेशपदं ते ।
साशयश्च निगमो विवृणीते
  कः परं भजतु नाथ विना त्वाम्[1] ॥ ३६ ॥

सा मतिः तव पदं मनुते या
  तद्वचो वदति यद्विभवं ते ।
सा तनुस्सृजति या तव पूजां
  त्वत्परः किल नरः किमु जल्पैः ॥ ३७ ॥

कालकूटकवलीकृतिकालो-
  द्दामदर्पदलनादिभिरन्यः ।
कर्मभिश्शिव भवानिव विश्वं
  शश्वदेतदविता भविता कः ॥ ३८ ॥

रुक्मिणीपतिमृकण्डुसुतादि[2]-
  ष्विन्दुचूड भवतः प्रसृता या ।
सा दयाझरसुधारसधारा-
  वर्मिता मयि दृगस्तु नमस्ते ॥ ३९ ॥

---

1. ३४, ३६: शिवस्य त्रिमूर्त्यतीतपरतत्त्वरूपत्वं, तस्य सर्वेशितृत्वप्रतिपादकश्रुतिप्रमाणादिकं च शिवपारम्य-प्रतिपादकेषु शिवतत्त्वविवेकादिषु अप्पय्यदीक्षितादीनां ग्रन्थेषु प्रपञ्चितम् । 2. रुक्मिणीपतेः कृष्णस्य शिवाराधनात्संतान-प्राप्तिः, शिशोः मार्कण्डेयस्य पानार्थं पयोऽब्धिसृष्टिश्च पुराण-प्रसिद्धे ।

इत्यभिष्टुतिभिरुज्ज्वलपुष्प-
स्वर्णरत्ननिवहैरभिपूज्य ।
तौ शिवौ धरणिजानिबिडौजा[1]
गाहते स्म नगरीं निबिडौजाः ॥ ४० ॥

भूवरस्य धुरि पावकयन्त्रा-
दुत्थितासु घनसारनिभासु ।
विस्फुलिङ्गघुटिकास्विव काश्चित्
सङ्गताः प्रतिबभुर्दिवि ताराः ॥ ४१ ॥

पूर्वदिङ्मृगदृशो द्युसमूढा[2]
ध्वान्तकुन्तलभरान्तरलग्ना ।
अञ्चति स्म नवमौक्तिकरेखा-
पाण्डुता मुखविभूषणभावम्[3] ॥ ४२ ॥

नायको विजयते ननु राज्ञां
सैष इत्युपहरन् कर[4]वर्गम् ।
शाहभूमिकमितारमुदीत-
स्संभ्रमादयितुमास्थित राजा ॥ ४३ ॥

चन्द्रिकाकुसुमदाम सुधांशो-
श्चारु भर्तुरुपलभ्य महर्षा ।

1. पार्थिवेन्द्रः । 2. Ms. द्विसमूढ । 3. अनेनापि श्लोकेन पावकयन्त्रोद्गतविस्फुलिङ्गा एव वर्ण्यन्ते । द्युसमूढा व्योमपर्यन्तमुपरि वाहिता नवमौक्तिकरेखाया इव विस्फुलिङ्गघुटिकावलेः येयं पाण्डुता सा पूर्वदिङ्मृगदृशः प्राचीनायिकायाः ध्वान्तरूपकुन्तलभरान्तरलग्ना नवमौक्तिकरेखाधावल्यरूपमुखभूषाभावमञ्चति स्म । 4. करः अंशुः, उपहारश्च ।

उत्पलिन्यलिमिषेण वितेने
　　साञ्जनं कुवलयोल्लमदक्षि ॥ ४४ ॥

सस्मिता सरसतां कलयन्ती
　　कैरविण्युडुपतेरभिकस्य[1] ।
चञ्चरीकवलयध्वनिहृद्यं
　　पादमर्शनमुपातनुते स्म ॥ ४५ ॥

वासवादिमदिशासु दधाने
　　चन्दनच्छुरणविभ्रममिन्दौ ।
वल्लभे कुमुदिनी समतानी-
　　दानने मलिनतामलिदम्भात् ॥ ४६ ॥

यामिनी कुवलयोज्ज्वलनेत्रा
　　चन्द्रबिम्बकमनीयमुखश्रीः ।
चन्द्रिकोल्लसितहासविलासा
　　लोकमाकलयत स्मरवश्यम् ॥ ४७ ॥

आस्त वेशितकरः कुमुदिन्या-
　　मभ्युदीतरजसि द्विजराजः[2] ।
अस्मयन्त हरितः कमनीय-
　　ज्योत्स्निकाधवलिमव्यपदेशात् ॥ ४८ ॥

1. कामुकस्य । 2. द्विजराजश्चन्द्रः, ब्राह्मणोत्तमश्च । रजः परागः, स्त्रीणामार्तवं रजश्च । वेशितकर आस्त स्पृष्टवान् । पुष्पवतीं कुमुदिनीरूपनायिकां द्विजराजस्सन् चन्द्रः पस्पर्श इति दिशो ज्योत्स्नामिषेण जहसुः ।

कालकूटलहरीभरवीची-
मण्डलाग्र[1]लतिकाशितधाराः ।
दावपावकशिखाश्च मयूखा-
नैन्दवान् भृशममन्वत कोकाः ॥ ४९ ॥

सादरास्सहवधूभिरुदश्च-
च्चञ्चुपङ्क्तिकलनां भजमानाः ।
सान्द्रमासत चकोरयुवान-
श्चन्द्रचारुकिरणग्रसनाय ॥ ५० ॥

इन्दुना ततकरं परिरम्भं
लम्भिता कुमुदिनी दयितेऽस्मिन् ।
भृङ्गनादमिषतो विरहार्ता-
रभ्यधादिव चिरादनुभूताः ॥ ५१ ॥

मान्द्रचन्द्ररुचिदुर्दिनमुद्य-
द्विद्युदा[2]त्मतनुभिर्विदधत्यः[3] ।
एति भूप इति कौतुकवत्य-
स्सौधवीथिमभजन्त सुदत्यः ॥ ५२ ॥

पङ्कजातनयना नयनाब्जं
कुङ्कुमेन परिचिह्नितमेका ।

---

1. मण्डलाग्रः असिः । 2. Ms. विद्युता । 3 आत्मतनुभिः विद्युत्प्रकाशं ज्योत्स्नाप्रवर्षं च विदधत्यः सुदत्यस्सुन्दर्यः ।

बिभ्रती भृशमशोभत सद्य-
स्सायकक्षतमिव प्रसवेषोः[1] ॥ ५३ ॥

मञ्जुलाञ्जनशलाकिकयैका
हस्तमुद्यमितया कमनीयम् ।
मन्दनिर्यदलिमालमिवाब्जं
पर्यशोभत वधूर्विदधाना ॥ ५४ ॥

काचिदावरण[2]विस्मरणेन
व्यञ्जती कुचतटं लसति स्म ।
पश्य भूप किरतीह मनोभू-
र्बाणसन्ततिमिति ब्रुवतीव ॥ ५५ ॥

वेणिकामुखपदे[3] करसक्तं
बिभ्रती कुसुमगर्भक[4]मेका ।
पर्यभान्निजमुखद्रुहमिन्दुं
वक्त्रसीम्नि तमसः क्षिपतीव ॥ ५६ ॥

कापि हारमधिहस्तमगेजं
तन्वती विलसति स्म मृगाक्षी ।
एष भूमिकमिता मम नेते[5]-
त्युत्सुकेव वृति[6]मङ्गलमाल्यम् ॥ ५७ ॥

---

1. पुष्पेषोः । 2. आवरणं कञ्चुलिकारूपम् । 3. वेणी प्रारंभस्थले पुष्पगुच्छनिवेशनोचिते स्थाने । 4. केशमध्यनिहितं कुसुमगुच्छकम् 'केशमध्ये तु गर्भकः' इत्यमरः (२-६-१३'१) ।Ms. कर्भक । 5. मम नेता मम भर्ता । 6. वरणार्थक. ।

लेपनाय कुचसीमनि हस्तं
सन्निवेश्य लसति स्म तदैव ।
कापि विभ्रमवती ननु लब्धः
कोक इत्यजहतीव मुदा तम् ॥ ५८ ॥

नीलमध्यविलसन्नवमुक्ता-
स्तम्भविभ्रममुदारमुपेतम् ।
मल्लिकाकुसुमशीलितभागं
वेणिकाण्डमिव मन्दिरलक्ष्म्याः[1] ॥ ५९ ॥

गेहमैन्द्रमपि नैव समं मे
धानदं[2] तदपि[3] वेत्यभिगर्जत् ।
तुङ्गशृङ्गविनिपङ्गिपताका-
शाटिकापटपटारभटीभिः ॥ ६० ॥

पश्यता स्वमनु बिम्बकदम्बं
रत्नभित्तिषु जनैरनुरुध्ये ।
नन्वहं बहुभिरित्यनुभूत-
प्राभवेन चरता कमनीयम् ॥ ६१ ॥

---

1. श्लो ५९ आरभ्य ६३ तमे श्लोके इन्दिरास्पदमित्यन्तेन आस्थानमण्डपवर्णनम् । गृहलक्ष्म्याः वेणिकण्डमिव दीर्घा वेणीवेत्युपमा । मल्लिकाफाक्किका[भाश्चि]ताां नीलवेणीमिव मुक्तास्तं-भाञ्चितं नीलाभोगमुपेतम् । 2. कौबेरम् । 3. Ms. तमपि । चरता तत्र संचरता रत्नभित्तिषु स्वमनु आत्मानमनु बिम्ब-कदम्बं स्वशरीरप्रतिबिम्बनिकरं पश्यता 'ननु अहं बहुभिर्जनैरनुरुध्ये', 'बहवो जना मामन्वागच्छन्ति' इति अनुभूतप्राभवेन एकाकिनापि प्रभुवत्संपन्नानुयात्रेण कमनीयम् । इन्दिरास्पदमिति शेषः ।

कॢप्ततत्तदुपचारभराभिः
कामिनीविततिभिः प्रतिकक्ष्यम् ।
[1]अङ्गिनीभिरिव संभृतशोभं
काममोहनविलासकलाभिः ॥ ६२ ॥

उर्वरापतिररातिधराभृ-
दुर्वराशिदवपावकतेजाः ।
इन्दिरास्पद[2]मविन्दत गेहं
वन्दिराजिपरिगीतजयश्रीः ॥ ६३ ॥

नरपतिकुलशेखरस्सलीलं
परवनिताभिरुदञ्चितोपचारः ।
मदनमदमलिम्लुचा[3]कृतिः श्री-
सदनमवाप्य विलासवानलासीत् ॥ ६४ ॥

पश्यत्पादनयादिमाखिलनयस्वातन्त्र्यमव्याहतं
धर्मिग्राहकमानसिद्धममृतस्फीताश्च यस्योक्तयः ।
तस्य श्रीधरवेङ्कटेशसुधियो लिङ्गार्यसूनोः कृतौ
श्रीशाहेन्द्रविलासकाव्यतिलके सर्गश्चतुर्थोऽजनि ॥

॥ इति श्रीधरवेङ्कटेशकृते शाहेन्द्रविलासे चतुर्थस्सर्गः ॥

---

1. मूर्तिमतीभिः कलाभिरित्यनेनान्वयः । 2. लक्ष्मीविलासाभिधमास्थानम् । 3. मोषक- ।

## ॥ पञ्चमस्सर्गः ॥

वसुधातलवासवोऽहनीव
प्रमथास्त्रो[1] रजनौ विहर्तुकामः ।
उदियाय धनुर्धराग्रतंम:
परिवारैरखिलैरुपास्यमानः ॥ १ ॥

श्लथनाय धृतेर्विलासिनीना-
मनलं[2] पूर्वमनन्यजो[3] जजृम्भे ।
अवलम्ब्य करं तदा सुधांशो-
रनवष्टभ्य कमप्यधीशिता कः[4] ॥ २ ॥

मदनस्य नुनोद मन्दभावं
दलितेन्दीवरसौरभं दधानः ।
चलयन्मलयानिलस्तरुणां
तरुणानामपि पल्लवान्मनांसि ॥ ३ ॥

अनुनीतिभरप्रसादिनी प्रा-
गबला शाहमहीभुजस्तदानीम् ।
उदकण्ठत किं विलोकयेन्मां
किमु जल्पेद्रमयेत्किमीशितेति ॥ ४ ॥

---

1. पुष्पेषुः । यथाहनि शाहेन्द्रः सपरिवारो धनुर्धरो विजहार तथा निशि मन्मथोऽपि । 2. असमर्थः । 3. आत्मयोनिः मन्मथः । 4. असहायः कः प्रभवति ।

स्मरविक्रममक्षमा विमोढुं
निजमाधिं दयितासु शंमितुं च ।
पुटपाकविधं मनो दधाना
समुपालब्ध तलोदरी स्मरादीन्[1] ॥ ५ ॥

अममास्त्र भवस्यधिज्यधन्वा
वनितायां मयि विक्रमः क एषः ।
यदि च ग्रहिलोऽसि दर्शय त्वं
मम नाथे मदृशे तव प्रतापम् ॥ ६ ॥

स हरः स्मर नोदमादयत्त्वां
यदि तत् त्वं क भयं क नु त्वदेवम्[2] ।
मदनान्तककर्तां प्रथां तु लेभे
किमु जल्पेन यशो हि पुण्यलभ्यम् ॥ ७ ॥

मलयानिल एष दृष्टयलक्ष्यो
मृदुलं सूनमिदं च साधनं ते ।
मदनोपधुनोति[3] मां ब्रुवे किं
ननु वामे हि विधौ न किन्तु वामम् ॥ ८ ॥

---

1. स्मरमलयमारुतचन्द्रादीन् । Ms स्मराधीन् । 2. हे स्मर स हरः त्वां न उद्मादयत्, नोन्मूलितवान् । यदि तत् यदि तथोत्सादितवान् स्यात्, त्वं क, त्वत् त्वत्तो भयं जनानां जायमानं च क नु । 3. हे मदन उपधुनोति इति च्छेदः । मलयानिलः सूनं चेति अन्वयः ।

कुसुमं मृदुलं मृदुं समीरं
कुलिशी[1] भावयितुं कुतस्त्वमागाः ।
स्मर कस्तव दोष एष तं त्वां
हृदि निष्पादितव[2]त्यहं विनिन्द्या ॥ ९ ॥

अलिके यदशिश्रियो हुताशं
चटुलज्वालजटालमिन्दुमौलेः ।
तदसूत तवाश्रयाशभावं
ननु चेतोज फलान्तरं न जाने[3] ॥ १० ॥

पवमान यदृच्छया श्रितोऽपि
त्वमसौ यन्मम जीवितं दुनोषि ।
उपपन्नमतः प्रभञ्जनत्वं
न जगत्प्राण इतीदृशं यशस्ते ॥ ११ ॥

असितोत्पलकाननं तपस्त-
न्मधुपूरप्लवशोधितो विधाय ।
समुपार्जितविक्रमो दुनोषि
त्वमकाण्डेऽनिल वैरमातनोषि ॥ १२ ॥

---

1. Ms. कुशली । 2. स्मरस्य मनसिजत्वादेवमुक्तिः ।
3. पूर्वश्लोके मनोजस्य स्वहृदयजन्यमुक्तम् । अत्र स्वहृदय एवोद्भूय तदेव दहतीति तस्य आश्रयाशत्वमुक्त्वा, तस्य हेतुरुत्प्रेक्ष्यते आश्रयाशत्वस्य अग्नौ प्रसिद्धत्वात्तत्रापि हरतृतीयनेत्रानलाश्रयादस्य दोषस्य संक्रान्तिरिति ।

ऋषयश्शपनानलान् द्विजिह्वा
विषवह्नीनपि यद्वमन्ति वायो[1] ।
वदने विनिधाय तद्भवन्तं
तव पारुष्यमितो न किन्नु गम्यम् ॥ १३ ॥

मलयानिल किं मया कृतं मां
ग्लपयन् किं फलमश्नुषेऽथवेदम् ।
क्षमते[2] मदनस्य तस्य दासे
त्वयि राजानुगुणा प्रजा हि लोके ॥ १४ ॥

हरिणाङ्क दुनोषि मे शरीरं
किरणैर्यद्गरलं त्वमुद्गिरद्भिः ।
वद तत्र निमित्तमाः प्रबुद्धं
वदनं त्वद्रुचिहारि धारयेऽहम् ॥ १५ ॥

विधुनोति वपुर्मदीयमिन्दो-
रहह स्पृष्टमपीदमंशुजालम् ।
अयि डिम्भचकोर पातुमेत-
द्यतसे किं कथयाम्यवैम्यगि त्वम्[3] ॥ १६ ॥

गरलं गलसीम्नि यः करालं
ज्वलनं ज्वालदुरासदं च फाले ।

---

1. ऋषीणां सर्पाणां च वाताशनत्वात्, पूर्वेषां शापतैक्ष्ण्यस्य, अन्येषां विषतैक्ष्ण्यस्य च सहजत्वादेवमुक्तिः । 2. अथवा त्वयि इदं क्षमते युज्यते । 3. फलमिति शेषः ।

धृतवान् गिरिशस्य मस्तके त्वा-
मपि तादृक्षमिदं न चित्रमस्मिन्[1] ॥ १७ ॥

असितोत्पलमायुधं निशातं
विरचय्योत्पलिर्नाविट[2] स्मरस्य ।
त्वमदा मम दारणाय, तत्किं
तव लभ्यं, न खलः फलाभिसन्धिः[3] ॥ १८ ॥

अयि चन्द्र यदा निपत्य राहो-
र्गरलोद्गारिणि वक्त्रगह्वरे त्वम् ।
सुखितो निरगास्तदेव बुद्धं
परुषत्वं तव निष्प्रतिक्रियं तत् ॥ १९ ॥

किर वा किरणानिहाङ्गमङ्गं
कुरु वा दूनमतो बिभेमि किं वा ।
परिपश्य मृगाङ्क वर्मितास्यां
प्रियवक्त्राब्जविलोकनामृतौघैः ॥ २० ॥

इति खिन्नधियो मनस्तरुण्या
विदती[4] कान्तमुपानये प्रसीद ।
इति तामनुनीय भूपतेस्सं-
निधिमागादगदच्च दूतिकेति ॥ २१ ॥

---

1. गलवर्ति-फालवर्तिवस्तुसामान्यात् शिरोवर्तिनो हिमांशोरपि तादृक्षं दाहकत्वं संभावितमेव। 2. चन्द्र। 3 फले अभिसन्धिः यस्य सः। न खलः फलाभिसन्धिनैव द्रुह्यति किन्तु स्वभावादेवेति अर्थान्तरन्यासः। 4. दूतिकेत्यनेनान्वयः।

विमुखे त्वयि विक्रियां विधत्ते
विशिखैरम्बुजलोचनां कठोरैः ।
विजितस्तव रूपविभ्रमैस्तां
भवदाज्ञात इव प्रसूनधन्वा ॥ २२ ॥

करिणीं परुषेण पङ्कमग्ना
हरिणीं निष्करुणेन लुब्धकेन ।
गमितामुपरोधमायताक्षी
परिखिन्नानुकरोति मन्मथेन ॥ २३ ॥

कुसुमानि न सेवते न वीटिं
न पटीर[1]द्रवमङ्गना किमन्यत् ।
उररीकुरुते न चाहृतिं[2] न
स्वपनं वा न भवान् प्रसीदतीति ॥ २४ ॥

नलिनीदलमेलनान्युशीर-
व्यजनान्दोलनमन्दमारुता वा ।
न हि शीतलयन्ति सुभ्रुवं ता-
मुपलभ्येव[3] भवत्पराङ्मुखत्वम् ॥ २५ ॥

स्वसपत्नविलोचनानुबन्धा-
द्विदधानैरिव वैरमायताक्ष्याम् ।
अमिताम्बुरुहैर्मरुत्किशोराः
प्रहितास्तां चलवत्कदर्थयन्ति ॥ २६ ॥

---

1. चन्दन- । 2. आहारम् । 3. ज्ञात्वेव ।

शनकैरुपलम्भितास्समीरैः
स्फुरदिन्दीवरबृन्दतः परागाः ।
परिपत्य तनौ पयोरुहाक्ष्याः
परितापेन मलीमसीभवन्ति ॥ २७ ॥

किमिवाकथयामि मन्दमिन्दो-
रमृतस्यन्दिभिरञ्चिते मयूखैः ।
नयने समवैति हन्त सूची-
शितधारापरिचुम्बिते नतभ्रू[1]ः ॥ २८ ॥

अधिगात्रमधीरलोचनायाः
पतिताः कैरवीणीपतेर्मयूखाः ।
व्यथयन्ति करा इवोष्णरश्मेः
स्पृशतीनामपि नः करान्कराला: ॥ २९ ॥

परिचुम्ब परिष्वजस्व कान्ते-
त्यनुनीतिं तव सन्निधानमोहात् ।
सृजती विवृणोति साधरोष्ठं
समवष्टब्धमुरो मुहुः करोति ॥ ३० ॥

अपि सन्निहितास्सखीर्नु जाना-
त्यपि न स्वं न च वा मनोभवार्तिम् ।
अरविन्दविलोचना किमन्यद्
भवदेकात्मकमञ्चति प्रपञ्चम् ॥ ३१ ॥

---

1. इन्दोरमृतस्यन्दिमयूखैर्मन्दमञ्चितत्वे सति सूचीतीक्ष्ण-धारासंपर्क इव नयनयोर्व्यथा जायत इति भावः ।

परितापभरं भवत्प्रसाद-
स्फुरदुद्दामसुधाझरीपरीता ।
परिहास्यति सा विभो दयस्व
क्षणमप्यत्र हि न क्षमो विलम्बः ॥ ३२ ॥

इति दूतिकया भृशानुनीतो
बलवत्प्रेमतरङ्गितान्तरङ्गः ।
कमनीयमवाप्य केलिगेहं
दयितां शाहविभुर्विलोकते स्म ॥ ३३ ॥

पदयोरविदूरलम्बमानं
कमनीयं कनकाम्बरं दधानाम् ।
रशनामणिभास्करस्य पङ्के-
रुहशङ्कात इवाप्तमंशुदूतम्[1] ॥ ३४ ॥

चरणाभरणद्वयं विराजद्-
द्युतिमुक्तापरिणद्धमादधानाम् ।
कुतुकीव लसन्मरालयुग्मं
नवलावण्यसरोवरेऽधिपद्मम् ॥ ३५ ॥

अधिरोह मनोजपुष्पमञ्चं
न विलम्बं कलयेति चाटुवाचः ।
विदधानमिव स्वनापदेशा-
च्चरणाब्जे मणिनूपुरं वहन्तीम् ॥ ३६ ॥

---

1. किरणरूपदूतम् ।

अधुना किमितीह वर्ततेऽसा-
विति रोषादिव कञ्चुलीं विभिन्नाम् ।
रभसेन वितन्वताभिरामां
कुचकुम्भद्वितयेन जृम्भितेन ॥ ३७ ॥

युवयोः कथमुन्नतिर्वदेतं
तदिति क्षेपणसंविधित्सयेव ।
श्रवणोत्पलयोस्समुल्लसन्ती
नयने सन्निधिगत्वरे वहन्तीम् ॥ ३८ ॥

वदनांबुजकान्तिवाहिनी सं-
प्लवनोल्लासजुषा मनोभवेन ।
विततामिव दोर्युगी मृणाली-
युगलीं भ्रूलतयोस्समुद्वहन्तीम् ॥ ३९ ॥

विरहय्य धनुर्लताविनामं
विशिखक्षेपणमप्यनाकलय्य ।
अपि सैन्यसमंघटय्य जेतुं
जगतीं चित्तभुवा लता[1]मिवाप्ताम् ॥ ४० ॥

शरदुन्मिषदिन्दुबिम्बकुम्भ-
स्रुतलावण्यसुधारसावसेकैः ।
मदनेन विलासिनेव वृद्धिं
गमितां कामपि चारुहेमवल्लीम् ॥ ४१ ॥

1. ओषधिरूपाम् ।

अनघैर्मणिहेमभिस्तदेत-
द्वपुरस्मान् परिभूषयिष्यतीति ।
स्पृहयेव विभूषणीभवद्भिः
स्पृहणीयां निबिडं निषेव्यमाणाम् ॥ ४२ ॥

मदनोत्सवसाधनौघनिर्य-
न्नवसौरभ्यकरम्बितोपकण्ठम् ।
अधिरोहति पुष्पमञ्चमस्मिन्
व्यगमन् किञ्चिदिवापदिश्य सख्यः ॥ ४३ ॥

समनोहरपुष्पमञ्चसीम-
न्युपविष्टस्तनुते स तां निविष्टाम् ।
रतिमन्मथयोरिवानुरूप-
स्पृहणीयस्स तयोस्समागमोऽभूत् ॥ ४४ ॥

अधरीकृतमन्मथः श्रिया यत्
तदयं भूमिपतिः स्मरं तदीयान्[1] ।
अपि चन्दनशैलमारुतादी[2]-
ननुकूलीकुरुते स वल्लभायाः ॥ ४५ ॥

प्रणयेन पुरः प्रचोद्यमानै-
रपि पश्चात्त्रपयोपकृष्यमाणैः ।

---

1. यत् अयं भूमिपतिः श्रिया अधरीकृतमन्मथः मन्मथं जितवान्, तत् स्वसामन्तीभूतं स्मरं तदीयं मलयानिलादिपरिबर्हं च स्ववल्लभाप्रीणनार्थं साधनीचकार। 2. मलयानिलादीन् ॥

कबलीकुरुते स्म कातराक्षी
कमनस्यातितरां मनः कटाक्षैः ॥ ४६ ॥

स्मितकन्दलसुन्दराननेन्दो-
र्मधुरैस्संलपितैरलासि यूनोः ।
मुमुदे फलसंमुखस्वयत्न-
स्त्वरमाणश्च बभूव पञ्चबाणः ॥ ४७ ॥

कमने करसंस्पृशि प्रियायाः
पुलकोद्भेदतरङ्गिताङ्गपालिः ।
नितरामुदभादिवापिनद्ध-
स्मरबाणप्रतिरोधिवारबाणा[1] ॥ ४८ ॥

हृतकञ्चुलिकावकुण्ठनोऽस्या
व्यरुचत्सैप कुचौ मृशन् कराभ्याम् ।
उपदा[2]कलितौ सुवर्णकुम्भौ
मदनेनेव निजश्रिया जितेन[3] ॥ ४९ ॥

मृगनाभिमुखैस्स तामलिम्प-
त्तमसावप्युचितास्पदाप्तिहर्षम् ।
व्यवृणीत सुगन्धिवस्तुजालं
निजसौरभ्यभरच्छलात्तदानीम्[4] ॥ ५० ॥

---

1. कञ्चुकम् । 2. उपहार- । 3. Ms. श्रियोर्जितेन ।
4. तमसावपि नायकं नायिकाप्यलिम्पत् तच्च सुगन्धिवस्तु-जालं तादृशोत्तमनायकनायिकाशरीररूपं स्वोचितास्पदप्राप्त्या स्वहर्षं स्वसौरभ्यमिषात् व्यवृणीत प्रकटीचकार ॥

उपगूहितुमुत्सुका स्वबिम्बे
मणिगेहस्पृशि सा विलम्बमाना ।
स्मितमुग्धमुखाम्बुजेन मन्दं
धुरि विस्रम्भमलम्भि वल्लभेन ॥ ५१ ॥

अपि नीविपदे करं दधानः
श्लथनेऽस्याजनि न क्षणं प्रगल्भः ।
युवतेः कुचकुम्भशीलितोर-
स्तट एष प्रतिलब्धपारवश्यः ॥ ५२ ॥

यदकारि पुरा स्मरेण रूक्षं[1]
प्रतिकारस्सकलस्य तस्य ताभ्याम् ।
निरमायि विहारमाददद्भ्यां
दयिताभ्यां प्रणयोत्तरङ्गिताभ्याम् ॥ ५३ ॥

अधरं मधुरं मिथो दशन्तौ
घनसाराञ्चितवीटिकाभिरामम् ।
तरुणौ विहृतं[2] तदादधातां
न निदेष्टुं यदवैति मन्मथोऽपि[3] ॥ ५४ ॥

अरणन्मणिमेखलाकलापौ
नटनं शीलयति स्म तारहारः ।

1. अयोगविप्रलंभे यद्रूक्षं कठोरं मन्मथेन पीडाप्रदानेनाकारि तत्प्रतिकारः संभोगे निर्दयक्रीडया ताभ्यां निरमायि कृतः । 2. विहारम् । 3. तथा विचित्र उद्दामश्च विहारः यथा मन्मथोऽपि नाज्ञापयितुं जानाति । मन्मथस्यापि प्रतिभामुल्लङ्घ्य रेजे तयोर्विहार इति भावः ॥

प्रमदं प्रथयन्निवाम्बुजाक्ष्यां
रभसेनोपरिखेलनं सृजन्त्याम् ॥ ५५ ॥

विचलज्जलदं मृगाङ्कबिम्ब-
श्रिततारं दरमुद्रितासिताब्जम् ।
अभिवल्गदुदारगुच्छयुग्म-
स्पृहणीयं वलति स्म हेमवल्ली[1] ॥ ५६ ॥

श्रमबिन्दुषु माकरन्दबिन्दु-
भ्रमभाजः कुटिलालकच्छलेन ।
वदनाम्बुरुहेऽपतन्मिलिन्दा[2]
विहरन्त्या मुहुरंबुजेक्षणायाः ॥ ५७ ॥

ललितेषु मनोजविभ्रमेषु
प्रमदां चारुविलासनैर्विलासी ।
कुसुमायुधतन्त्रमर्मपारं
गमयन्नुल्लसति स्म निर्वृतात्मा ॥ ५८ ॥

प्रतिलम्भितवत्यनङ्गमेवं
परितोषं मदनोपमे नरेन्द्रे ।
अधिकल्यमुपेत्य बन्दिवर्गाः
प्रतिबोधाय गिरश्शुभा व्यतन्वन् ॥ ५९ ॥

---

1. जलदेन धम्मिल्लस्य, मृगांकबिम्बेन मुखस्य, ताराभिराभरणस्य, असिताब्जेन नयनस्य, गुच्छेन स्तनस्य हेमवल्ल्या शरीरस्य च परामर्शः । 2. भ्रमराः ।

बलवत्परिधावितस्सुधांशु-
र्भवतः कीर्तिभरैरिव क्षितीन्दो ।
चरमाचलशृङ्गसङ्गतोऽस्मा-
वपनीतद्युतिवैभवो विभाति ॥ ६० ॥

अपजेष्यति ते मुखाम्बुजश्रीः
स्वमसावब्जविजेतृतायशः स्वम् ।
विगलिष्यति चेति निष्प्रभोऽयं
धरणीपाल विलोक्यते शशाङ्कः ॥ ६१ ॥

न रवेरलमस्मि सन्निधाने
महमेनं त्वमपि क्षमो विजेतुम् ।
वदनेन च पद्ममित्यधीश
त्वयि भारं विनिधित्सतीव चन्द्रः ॥ ६२ ॥

कुमुदप्रकरास्सलीलमन्द-
स्मितकान्ति ननु चोरितुं त्वदीयाम् ।
झटिति प्रतिभोत्स्यते भवानि-
त्यधुनोज्झन्ति भयादिवावनीन्दो ॥ ६३ ॥

तव कीर्तिभयाद्विधावतीन्दौ
सह तारासु गतासु तद्वधूषु ।
वसुधाधिपते विभान्ति पश्चा-
दिव लग्ना गगनाध्वसीम्नि काश्चित् ॥ ६४ ॥

सुहृदो भवदाननाम्बुजस्य
प्रविकासे विकसानि नो ततः प्राक् ।
इति संप्रति तत्प्रतीक्षि पद्मं
धरणीपाल विलम्बते विकासे ॥ ६५ ॥

सविता भवतः प्रतापभीत-
स्समुदेतुं प्रविलम्बते प्रमादम् ।
कलयेत्यनुनीतिमस्य दूतः
समुदीतोऽरुण एष संविधातुम् ॥ ६६ ॥

इति वन्दिगिरा कृतप्रबोधो
वसुधेन्द्रस्सह लोचनाम्बुजाभ्याम् ।
हृदयाब्जमनीनयद्विकासं
शिवचिन्तामिहिरप्रभाविलासैः[1] ॥ ६७ ॥

उपयात्यचिरान्मयूखमाली
न विषीदेति करेण चक्रवाकम् ।
अरुणः स्म धिनोति मन्दमन्दं
मुहुरामृश्य तदारविन्दबृन्दम् ॥ ६८ ॥

सुदृशां मदनाहवश्रमार्तिं
विरहार्तिं च तथा रथाङ्गनाम्नाम् ।
अरविन्दवनीचरास्समीराः
शमयन्तोऽथ शनैश्शनैर्विचेलुः ॥ ६९ ॥

1. भगवद्ध्यानरूपसूर्यप्रभाविलासैः ।

कमलाकरसीम्नि चक्रवाको
मुहुरुत्प्रेक्षितकेलिभङ्गिभेदः ।
उपहर्तुमना मुदा युवत्यै
बिसवल्लीं वदने वहन्नवात्सीत् ॥ ७० ॥

उदयाद्रिवनान्तसीम्नि कीरं
ग्रहयालोरिव सुन्दरं शबर्याः ।
करबिम्बफलं सरोजबन्धो-
रथ नव्यं परिशोभने स्म बिम्बम् ॥ ७१ ॥

बलवत्तिमिराख्यवैरिकूट-
त्रुटनोदीरितशोणितप्रवाहैः ।
अनुषक्त इवारुणश्चकाशे
रविरुद्यन्नुदयाद्रियुद्धभूमेः ॥ ७२ ॥

उदिते मिहिरे तमिस्रजालं
विजगाल प्रजहर्ष कोकलोकः ।
विचकास च वारिजातवृन्दं
विललासालिगणः पिबन्मरन्दम् ॥ ७३ ॥

उदयं श्रितवानिनः प्रहृष्टो
हृतवान्मुद्रणमाशु पद्मकोशे ।
मकरन्दधनग्रहेष्वशङ्का
भवतेति भ्रमरानिवान्वजानात् ॥ ७४ ॥

कुमुदं परिभूय चञ्चरीका-[1]
रसविधं पङ्कजकाननस्य हृष्टाः ।
उपलालनशालिनः प्रदातुः
कवयः क्षोणिपतेरिवोपजग्मुः ॥ ७५ ॥

परिरभ्य करैरिनप्रथावान् [2]
मिहिरो रञ्जयति स्म पद्मिनीं यत् ।
अहनि प्रतरां तदासि हर्षा-
दपि चक्रेण[3] वधूपभोगभाजा ॥ ७६ ॥

उपलब्धवसौ चिरादुपेते
रमणे रागिणि पद्मिनी दिनेन्द्रे ।
कमलस्फुरदानने वितेने
मृगनाभीतिलकं मिलिन्ददम्भात् ॥ ७७ ॥

अह्नां नेतुर्धामभिस्तुल्यधर्मा
निर्मायाथो नित्यकर्माणि हृष्टः ।
छायादानादीनि[1] शाहक्षितीन्द्रो
निस्तन्द्रश्रीरास्त शुद्धान्तसीम्नि ॥ ७८ ॥

---

1. भ्रमराः । 2. 'इनस्सूर्ये प्रभौ' इत्यमरः । इन इति प्रथावान् प्रसिद्धिमान् । 3. चक्रेण तदाह्वपक्षिणा, प्रभोः परिवारेण च । प्रभोः शृङ्गारलीलामनुसृत्य अनुचरसमूहेनापि तादृशी लीला अन्वभूयतेत्यर्थः ॥ 4. सूर्यपक्षे प्रकाशप्रदानं, राजपक्षे निरीक्षिताज्यादिषु स्वच्छायां दृष्ट्वा तदाज्यादीनां सत्पात्रे दानम् ॥

विज्ञापनां परिजनस्य विनम्रमूर्ते-
राकर्ण्य सांप्रतमभूषि सभास्थलीति ।
अन्तःपुरादवनिलोकपुरन्दरोऽयं
यातुं सभाममनुतान्वहक्लृप्तरीत्या ॥ ७९ ॥

पश्यत्पादनयादिमाखिलनयस्वातन्त्र्यमन्यादृशं
धर्मिग्राहकमानसिद्धममृतस्फीताश्च यस्योक्तयः ।
तस्य श्रीधरवेङ्कटेशसुधियो लिङ्गार्यसूनोः कृतौ
श्रीशाहेन्द्रविलासकाव्यतिलके सर्गोऽभवत्पञ्चमः ॥

॥ इति श्रीश्रीधरवेङ्कटेशकृते श्रीशाहेन्द्रविलासे पञ्चमस्सर्गः ॥

## ॥ षष्ठस्सर्गः ॥

अथाह्रियन्तायतलोचनाभि-
र्नेतुः पुरोऽलंकृतिकर्मठाभिः ।
विभूषणानि द्युतिवीचिकाभि-
र्विभूषिताशेषहरिन्मुखानि ॥ १ ॥

पटी[1]मुदारां नवभर्मक्लृप्तां
कयापि दत्तां कलयन्मृगाक्ष्या ।
नराधिराजः प्रतरामराज-
द्रुपःश्रियेव द्युतिमुष्णरश्मिः ॥ २ ॥

गारुत्मतासञ्जितमञ्जुसूत्रं
काचिद्वधूटी कटिसीम्नि तस्य ।
अचीक्लृपत्तोरणमागतेयं
लक्ष्मीरिति स्फारितकौतुकेव[2] ॥ ३ ॥

कयापि तस्याङ्गुलिरायताक्ष्या
रत्नोर्मिकाभिः परिमेलिताभूत् ।
दलत्प्रवालप्रसवप्रभाभि-
र्वल्लीमतल्ली मधुसम्पदेव ॥ ४ ॥

---

1. Ms.— टीम् । 2. कटिसूत्रस्य समागतलक्ष्मी-प्रत्युद्गमनार्थकतोरणेनोपमानम् ।

विभुर्व्यभादङ्गुलितद्विभूषा-
वज्रोपलांशू कलयन् मिलन्तौ ।
मधुं प्रवालाभरणं विधुं च
पर्यन्तभाजाविव पञ्चबाणः ॥ ५ ॥

अस्याङ्गुलीतद्गतवज्रभूषा-
स्फुरन्मयूखौ धरणीश्वरस्य ।
यशःप्रतापाविव रम्यरूपा-
वकल्पयेतां मुदमीक्षणानाम् ॥ ६ ॥

उदारगारुत्मतभूषणेन
तरङ्गिताभाङ्गुलिरस्य नेतुः ।
विराजते सोपसृता शुकेन
समुल्लसत्पल्लवधीजुषेव ॥ ७ ॥

समर्पितो वक्षसि तारहारः
कयापि हेमत्विषि भूमिनेतुः ।
यशोभरं हाटकशैलसानु-
विहारिणं निर्मलमन्वकार्षीत् ॥ ८ ॥

नराधिनेतुर्नवहारवल्ली
तदानने शीतलधाममोहात् ।
उपागता नूनमुडुच्छटा सा
तारात्मता[1] तां न तदु[2]ज्झति स्म ॥ ९ ॥

---

1. नक्षत्ररूपता, बृहत्त्वं च। 2. तत् तस्मादित्यर्थः।

कनत्प्रभं वक्षसि मेदिनीन्दोः
काऽपि व्यतानीत्कुरुविन्दनिष्कम् ।
नीतं वशं तस्य भुजप्रतापै-
र्निरीक्षते स्म द्युमणिं[1] जनोऽयम् ॥ १० ॥

स पद्मरागोज्ज्वलनिष्कभानु-
र्हरित्तमिस्राणि हरन्नमुष्य ।
सेवोपयाताक्षिसरोरुहौघ-
महर्षयत्प्रापदहानिलक्ष्मीम्[2] ॥ ११ ॥

रत्नावळीरञ्जितमञ्जुभूषा-
विमेलितोऽमुष्य विभोः कयापि ।
स्वमाश्रितोन्मीलति रत्नगर्भे-
त्यभिव्यनक्ति स्म मुदेव बाहुः[3] ॥ १२ ॥

कयापि कॢप्ते श्रवसोरभातां
मुक्ताविभूषे नृपशेखरस्य ।
समानधर्माननमाश्रिते द्वे
तारे निरस्येव रुषा शशाङ्कम् ॥ १३ ॥

मुक्तामणीकुण्डलयोर्मयूखा
वक्त्रारविन्दे वसुधावलारेः ।

1. सूर्यम् । 2. अहानि अहीनां लक्ष्मीं प्रापत् । अत्र कोशस्थः पाठो न तृप्तिमावहति । 3. स्वमात्मानं बाहुमाश्रिता रत्नगर्भा भूः रत्नगर्भेतिनामानुरूपमुन्मीलति, बहिस्तद्बाहौ रत्नावलीं प्रकाशयन्ती सती, इति मुदा अभिव्यनक्ति स्म ॥

मन्दस्मितोदारमरीचयश्च
पर्यस्फुरन्नप्रतिपन्नभेदाः ॥ १४ ॥

संप्रापितो मूर्धनि सारसाक्ष्या
कयापि मुक्ताकलितं किरीटम् ।
असावलासीन्नरलोकनेता
त्रियामया[1] चन्द्रमिवोदयाद्रिः[2] ॥ १५ ॥

मुक्तामणीपादुकयोर्युगेन
विभोः पदे योजयति स्म कापि ।
तदा जनोऽमंस्त मुदा मराली-
नालीकसंसृष्टिरियं नवेति ॥ १६ ॥

अथो निशान्तादगमत्स मन्दं
विलासिनीभिर्विहितोपचारः ।
पाणी समालम्ब्य पयोरुहाक्ष्याः
पार्श्वद्वये भूतलशीतलांशुः ॥ १७ ॥

केलीमरालीभिरुपेयमाना-
स्सलीलयानस्पृहयेव[3] मन्दम् ।
शिञ्जानमञ्जीरपदारविन्दा
निशान्तकान्ता नृपमन्वयुस्तम् ॥ १८ ॥

तदक्षिपातेषु विलासवत्य-
स्त्रपास्पृहाभ्यां तरलीभवन्त्यः ।

1. Ms. त्रयीमयी । 2. Ms.— द्रेः । 3. ' स-लील-यान-स्पृहया ' च्छेदः ॥

प्रगल्भभावं भृशमाश्रयन्त
न द्रष्टुमद्रष्टुमपि प्रभुं तम् ॥ १९ ॥

निवर्त्य नेत्राञ्चललीलया ता
निषेवितः कञ्चुकिभिस्सवेत्रैः ।
अतीत्य कक्ष्यायुगलीमयासीत्
प्रभुस्सभां भोसलवंशदीपः ॥ २० ॥

जिष्णुं तमेनं प्रभुमुद्वहन्ती
बुधैस्सदस्यैरुपशोभमाना ।
यशःकलापं गुरुमादधाना
लोके सुधर्मेत्युपगीयते या[1] ॥ २१ ॥

या सौहिती काचन लोचनानां
कलाकलापस्य नवो विवर्तः ।
अवस्थितिः काचन विस्मयस्य
वेषान्तरं निर्वृतिवैभवस्य ॥ २२ ॥

सारस्वतान्[2] केवलमैन्दिरांश्च[3]
सारानुदारानरविन्दजन्मा ।

---

1. जिष्णुरिन्द्रो जयशीलश्च । बुधाः पण्डिता विबुधाश्च । गुरुं महान्तं यशःकलापम् ; यशसां कलापो यस्य सः, तादृशं गुरुं बृहस्पतिं च । सुधर्मा तन्नामवती देवेन्द्रसभा सुष्ठुधर्मवती शाहेन्द्रसभा च ॥ 2. विद्यामयान् । 3. लक्ष्मीमयान् ।

यस्या विधानाय मनोहरायाः
पर्यग्रहीन्नो करणान्तराणि ॥ २३ ॥

यस्याः पुरः स्तम्भगताम्बुयन्त्रा-
दूर्ध्वं वलन्ती नवनीरधारा ।
हर्तुं कलङ्कं हरिणाङ्कबिम्बे
क्लृप्तेव धत्ते कुतुकं जनानाम् ॥ २४ ॥

पद्यं न हृद्यं तदिदं तु हृद्य-
मिति ब्रुवन् यत्र शुकप्रकाण्डः ।
कवीन्द्रसंदर्भगुणागुणेषु
प्रमाणतामद्भुतमभ्युपैति ॥ २५ ॥

लीलाकुरङ्गाः कृतकं कुरङ्गं
दृष्ट्वा मृगेन्द्रं च पुरोऽस्य यस्याम् ।
प्रीत्योपयान्ति व्यपयन्ति भीत्या
स्तैमित्यमश्नन्ति च विस्मयेन ॥ २६ ॥

यस्यां मणिस्तम्भपरम्परासु
बिम्बं निजं प्रेक्ष्य नृपाः प्रसीद ।
मयि प्रभो प्रीतिमयि प्रकुर्वि-
त्यभ्यर्थनां चाटुभिराश्रयन्ते ॥ २७ ॥

नानापरिष्कारभराभिरामं
नवं वहन्त्यास्तरणप्रकाण्डम्[1] ।

1. -श्रेष्ठम् ।

विलोक्यते यत्र कुतूहलेन
    प्रहर्षभूमोन्मिषितेव भूमिः ॥ २८ ॥

उत्पश्यता कृत्रिमनीलकण्ठ-
    मुच्चैस्तटित्वन्मति[1]विक्लवेन ।
तमञ्चति स्निग्धधिया मयूरे
    हंसेन यस्यां ध्रियतेऽतिहर्षः[2] ॥ २९ ॥

तस्यां सभायां धरणीमहेन्द्रः
    स्निग्धोपबर्हाञ्चितपश्चिमाङ्गः ।
अध्यास्य भद्रासनमातनिष्ट
    प्रमोदमेदस्वि मनो जनानाम् ॥ ३० ॥

अङ्गेश्वरश्शारदचन्द्रगौर-
    मधारयच्चामरमग्रतोऽस्य ।
विभोर्द्दगम्भोरुहमन्दिराया
    विलासजं हासमिवेन्दिरायाः ॥ ३१ ॥

काश्मीरनेता कलधौतक्लृप्तं
    मयूरबर्हामलतालवृन्तम् ।
धुन्वन्मनोज्ञं धुरि मेदिनीन्दो-
    र्मन्दानिलं कन्दलयन्नवात्सीत् ॥ ३२ ॥

---

1. Ms. त्वन्मिति- । 2. भावस्त्वत्र न विशदः ।

समञ्जसासञ्जितमञ्जुमुक्ता-
चूर्णं सुवर्णस्मयचोरवर्णम् ।
करे नरेन्द्रस्य कलिङ्गनाथ-
स्ताम्बूलपर्णं वितरन्मुदासीत् ॥ ३३ ॥

मुक्तामयीं पाण्ड्यपतिः कलाची-
मग्रे वहन्नस्य महीवलारेः ।
यशःप्रतिस्पर्धिशशाङ्कबिम्बं
हस्ते गृहीत्वोपहरन्निवासीत् ॥ ३४ ॥

तदातदा लाटधरेश्वरेण
कर्पूरवीटीकलितं तदीयम् ।
चन्द्रांशुगौरांशुकपल्लवेन
शनैरुपास्कारि मुखारविन्दम्[1] ॥ ३५ ॥

अमुष्य भूलोकपुरन्दरस्य
भ्रूकेलिकैङ्कर्यपुरस्क्रियाभिः ।
अमंसत स्वानतिमात्रधन्या-
नन्येऽपि भूपालकुलावतंसाः ॥ ३६ ॥

प्रगल्भसौरभ्यधुरन्धराभि-
र्मरन्दमाधुर्यमनोहराभिः ।
अभूषयन्वाग्भिरमुं कवीन्द्राः
प्रसूनमालाभिरिवोज्ज्वलाभिः ॥ ३७ ॥

---

1. अंशुकपल्लवेन पटाञ्चलेन मुखम् उपास्कारि स्वेदादि-मार्जनेन परिष्कृतम् ।

फण्यग्रगण्य[1]प्रभृतिप्रबन्ध-
प्रगल्भतात्पर्यविवेचनादीन् ।
प्रसञ्जयन्ति स्म वचोनिगुम्भान्
प्रभोरभिज्ञस्य बुधास्समीपे ॥ ३८ ॥

चान्द्रा मयूखा इव चन्द्रकान्तं
संद्रावयन्तः सहसैव भावम् ।
समस्फुरन् तस्य विभोस्समीपे
वीणाभृतां गानरसाः प्रसन्नाः ॥ ३९ ॥

[2]गुरुर्धरित्रीं कुतुकात्प्रपन्नः
प्राक्प्रेमभूम्नेव हवे हविर्भिः ।
पिचण्डिलत्वं सुरमण्डलस्य
कुर्वन्नुदग्रप्रतिभाविभावः ॥ ४० ॥

पुष्णन् बुधालीविपुलाभिहर्ष-
विश्राणनेनानिशमुल्लसन्तीम् ।
शाहक्षितीन्दोर्विशदां यशश्री-
ज्योत्स्नां स्थिरः कोऽपि शरद्विलासः ॥ ४१ ॥

श्रीभोसलेशानमहःकृशानुं
द्विषत्कुलप्लोषधुरां वहन्तम् ।

---

1. महाभाष्यकृत्पतञ्जलि-। 2. इत आरभ्य श्लोकपञ्चकेन साहेन्द्रमन्त्रिप्रवरस्य त्र्यम्बकरायमखिनो वर्णनम्। गुरुः देवगुरुर्बृ-हस्पतिः। प्राक्प्रेम पूर्वं सुरेषु स्वशिष्येषु सहजतया वर्तमानम्, तद्भूम्नेव भूतलाध्वरहविर्भिः तान्पोषयन्।

उद्दीपयन्त्यानिलसंप्रवृत्या
मत्या महत्या नितरां विराजन्[1] ॥ ४२ ॥

महौजसः शाहमहीश्वरस्य
कृपाङ्कुरे सङ्कलितस्पृहाभिः ।
परम्पराभिः पृथिवीपतीनां
कृतस्ववीक्षावसरप्रतीक्षः ॥ ४३ ॥

शुभैर्गुणैस्त्र्यम्बकराय[2]धीर-
श्रेयानुदर्काव्यभिचारितर्कः ।
दिशान्तविश्रान्तयशा महीन्दो-
रसेवताभ्यर्णममात्यमौलिः ॥ ४४ ॥

त्रियम्बकार्यस्य गुणानुकारी
नृसिंहरायस्य[3] तदग्रजस्य ।
आनन्दराय[4]स्तनुभूरमात्यः
प्राप्तोऽन्तिकं प्रेमपदं क्षितीन्दोः ॥ ४५ ॥

वसुन्धरापालवतंसकोटी-
कोटीरहीरस्फुरदच्छकीर्तिः ।

---

1. भोसलेन्द्रतेजोरूपमग्निं अनिलसंप्रवृत्त्या वायुवदाचरन्त्या उद्दीपयन्त्या मत्या स्वबुद्ध्या विराजन् । राजमन्त्रिणोः क्षत्रब्रह्मणोर्योगस्य अग्निवायुयोगोपमा प्रसिद्धैव । यथाह कालिदासः– पवनाग्निसमागमो ह्ययं सहितं ब्रह्म यदस्त्रतेजसा । 2. धर्माकूतादिग्रन्थकर्ता । धीरेषु श्रेयान् धीरश्रेष्ठ इति यावत् । 3. त्रिपुरविजयचंप्वादिकर्ता एकोज्यादिमन्त्री । 4. विद्यापरिणयादिकर्ता ।

गुणोज्ज्वलैः शाहमहीसुधांशु-
रुपेत्य तैस्तैस्सचिवैरुपासि ॥ ४६ ॥

विभुं तदा संसदि वेत्रहस्ते-
र्नावेदितः सेतुनरेन्द्र[1]दूतः ।
अवन्दतामन्दतरोपहार-
हारादिरोचिश्छुरिताखिलाशः ॥ ४७ ॥

अथावनीमण्डलशीतरश्मे-
राकूतभङ्गीमनुरुन्धतैषः ।
अमात्यमौलेर्वचसा नियुक्तः
प्रह्वाकृतिर्वाचमयुङ्क्त दूतः ॥ ४८ ॥

राजन् प्रतापैस्तव निष्प्रतीपै-
रियं क्षितौ रक्ष्यत एव सर्वा ।
भ्रूकिङ्करस्ते ननु सेतुनेता
यत्सीदतीदं तु दुनोति चेतः ॥ ४९ ॥

मतङ्गजास्संप्रति माधुराणां[2]
मदाम्बुभिः पङ्किलतां नयन्तः ।
पथो निरुन्धन्ति चिरेण सेतो-
र्महीधरेन्द्रा[3] इव निर्झरौघैः ॥ ५० ॥

---

1. सेतुनरेन्द्रः रघुनाथनामा रामनाथपुराधीशस्सेतुपतिः 'किलवन्' इति ख्यातः । 2. मधुराराज्यसैनिकानाम् । 3. महापर्वताः ।

धरां खुराग्रैरवदारयन्त-
स्तुङ्गास्तुरङ्गा मधुरेश्वरस्य[1] ।
निवारयन्तस्तपनं रजोभि-
र्वितन्वते विन्ध्यमिवान्यमुच्चैः ॥ ५१ ॥

किमाचरत्वप्रतिपत्तिखिन्न-
स्स सेतुराडद्य बलोद्धतास्ते ।
कदर्थयन्त्युत्कटमादधाना-
स्सख्यं वचोभिस्समरं क्रियाभिः ॥ ५२ ॥

सेतुं प्रयातुं समुपस्थितेषु
धर्मप्रधानेषु जनेषु नाव्ये ।
अतन्यतोदन्वति माधुरैस्त-
स्यातरस्य प्रथमोऽवतारः[2] ॥ ५३ ॥

रत्नानि रत्नाकरतो हरन्ति
करांश्च देशे कलयन्त्यमित्राः ।
दुर्गाण्यगृह्णन्विपिनान्यभिन्दन्
पुरीमरुन्धन्नपि सेतुनेतुः ॥ ५४ ॥

ततो महाराज तव प्रसादं
स सेतुराडिच्छति तद्वयेथाः ।

---

1. शिशोर्विजयरङ्गचोक्कनाथस्य मधुरेश्वर इति निर्देशः । वस्तुतस्तदानीं मङ्गम्मानाम्नी तत्पितामह्येव मधुराराज्यधुर्वहा बभूव । तस्याश्च सेनापतिः दलवाय् नरसप्पय्यनामा ।

2. सेतौ तरणार्थं नावमारोहतामिदंप्रथमतया माधुरैः आतरः तरणशुल्कं विहितः ।

समाश्रितत्राणयशो विपन्न-
संत्राणपुण्यं युगपद् भवेत्ते ॥ ५५ ॥

इति निगदितवन्तं सेतुनाथस्य दूतं
सकरुणनयनान्तालोकितैर्भोसलेन्द्रः ।
सममनुतः समस्तं सङ्कटेताचिरेण
व्रज गृहमिति जल्पन् प्राहिणोन्मन्त्रिमौलिः ॥ ५६ ॥

पश्यत्पादनयादिमाखिलनयस्वातन्त्र्यमन्यादृशं
धर्मिग्राहकमानसिद्धममृतस्फीताश्च यस्योक्तयः ।
तस्य श्रीधरवेङ्कटेशसुधियो लिङ्गार्यसूनोः कृतौ
श्रीशाहेन्द्रविलासकाव्यतिलके सर्गः श्रितः षष्ठताम् ॥

॥ इति श्रीश्रीधरवेङ्कटेशकृते शाहेन्द्रविलासे षष्ठस्सर्गः ॥

## ॥ सप्तमस्सर्गः ॥



कार्यतत्त्वगतिनिश्चयाय स
　　प्रष्टुमैच्छदथ मन्त्रिणं नृपः ।
ज्ञातमर्थमपि धीमतां धिया[1]
　　व्यामृशन्ति खलु दीर्घदर्शिनः ॥ १ ॥

अब्रवीदपि स भारतीं मिथः
　　शीलयन्नरपतिः स्मितद्युतिम् ।
स्वागमावगतये तया पुरः
　　प्रेषितां प्रियसखीमिव स्विकाम् ॥ २ ॥

सेतुनेतुरधुना विपत्तिरा-
　　कर्णितेव, यवनेन्द्रयूथपाः[2] ।
राजराम[3]विषये वितन्वते
　　विप्लवं, तदुभयं सुदुस्सहम् ॥ ३ ॥

डिल्यधीशबलनिग्रहस्ततः
　　कार्य एव, स च सेतुनायकः ।
संश्रितो ननु चिराद्दयास्पदं
　　तत्पुरः किमिह संप्रधार्यताम् ॥ ४ ॥

---

1 सहायभूतया । 2. यवनेन्द्रः देहलीशो मुहम्मदीय औरङ्गसीब्नामक । तस्य यूथपः सेनापतिः ‘सुल्फिकर् कान्’ नामकः ॥ 3. राजरामः शिवाजिपुत्रः, यः चेञ्जीदुर्गे सुल्फिकर्-कान्नामेकनोपरुद्धः ।

भाषितं तदवनीहिमद्युते-
राकलय्य नयतत्त्वकोविदः ।
ऊर्जिताश्रयतया मनोहरा-
मभ्यधत्त स गिरं मिताक्षराम् ॥ ५ ॥

वेद्यतामविदितं मयाधुना
देव किन्तु विदुषस्तवाग्रतः ।
तद्यथामति निवेदयाम्यहं
त्वन्निदेशमवतंसयन् परम् ॥ ६ ॥

यद् भवानिह तुरुष्कदुष्क्रमं
वार्यमाह वसुधासुधानिधे ।
अन्यथा न भवितुं खलु क्षमं
सर्वथा तदुपपत्तिवर्मितम् ॥ ७ ॥

वारिते यवनवर्गदुर्मदे
राजरामविभुमेदिनीस्थितिः ।
अस्तकण्टकतया समुन्मिषे-
दश्नुवीत च भवद्यशो दिशः ॥ ८ ॥

देवताधरणिदेवरक्षणं[1]-
स्तोषितापि च भवेद्वसुन्धरा ।
तावकी च महसा महीयसी
श्रीरवैति न कदापि दुष्करम्[2] ॥ ९ ॥

1. तुरुष्काधिक्ये देवालयब्राह्मणधर्माणां प्रणाशादेवमुक्तिः ।
2. न कदापि दुष्करमवैति; नैवेयं किमपि दुष्करं मनुते ।

किं वचोभिरतुरुष्कविप्लवां
क्ष्मामिमां कलयितुं तवोदयः ।
कालदुर्मदविदारकारिणः
शङ्करस्य कृपयोपपादितः ॥ १० ॥

अप्रतिक्रियमिथोविरोधता
दूषिता यवनवाहिनीश्वराः ।
प्रत्यनीकदमनाक्षमास्तत-
स्तेषु दुष्यति न ते विलम्बनम् ॥ ११ ॥

सेतुनाथपरिगुप्त्यनन्तरं
नाथ तेषु यवनेषु वाहिनीम् ।
प्रेषयिष्यसि हुताशनार्चिषं
कीचकेष्विव मिथोनिघर्षिषु ॥ १२ ॥

सेतुनेतुरवसीदतो विना
त्वां परं हि शरणं न दृश्यते ।
नैष योद्धुमरिभिः प्रगल्भते
सन्धिकर्म तु न तेऽनुमन्यते ॥ १३ ॥

कर्तुमर्हसि तदस्य पालनं
पर्युदस्तपरिपन्थिमण्डलम् ।
रक्षणं हि शरणाभिकाङ्क्षिणां
त्वत्कुलस्य सहजं गुणं विदुः ॥ १४ ॥

पालनं शरणकाङ्क्षिणां पुरा
विश्रुतं यदधिजानकीपति ।

अद्य तद्भवतु सुप्रतिष्ठितं
क्षोणिमण्डलपुरन्दर त्वयि ॥ १५ ॥

यं प्रशंसति जनो यदृच्छया[1]
तस्य जन्म खलु जन्मभूतले ।
अर्थमार्जितवतोऽप्यतादृशः[2]
का विशेषकणिकाप्यकिञ्चनात् ॥ १६ ॥

मस्तकं मकुटमङ्गदं भुजा-
मङ्गुलीमपि तथाङ्गुलीयकम् ।
हारवल्लिरपि भूषयत्युरो
दिक्तटीरपि यशस्तु निस्तुलम् ॥ १७ ॥

त्राणकाङ्क्षिषु नृपेष्वनुग्रहो
निग्रहोऽवसरसंभृतोऽरिषु ।
पौरजानपदरञ्जनं गुणै-
स्तन्वते नरपतिं यशस्विनम् ॥ १८ ॥

यः प्रसह्य लघुतां महीयसो
गौरवं च घटयेल्लघीयसः ।
तन्न तस्य नृपतेर्यशस्करं
न स्वभावविगमस्तयोरपि ॥ १९ ॥

---

1. स्वोपकारादिकारणविशेषमनाश्रित्य । यः कोऽप्युदासीनोऽपि जनो यं तद्गुणश्रवणावर्जितः स्तौति इत्यर्थः । 2. तादृशजनप्रशंसाया अपात्रभूतस्य ।

औचितीसफलते कृपाक्रुधो-
वैशसाव्यतिकरः करग्रहे ।
जाल्मकुण्ठगतिवर्जनं क्रिया-[1]
स्त्वेधयन्ति नृपतेर्यशःश्रियः ॥ २० ॥

औचितीकवचितव्ययैर्धनै-
र्विक्रमैरपि समीक्ष्य संहितैः ।
आद्रवैरपि गुणैरकृत्रिमैः
श्रीयशश्च नियते महीपतेः ॥ २१ ॥

त्वां गुणास्समयबन्धकारिणः[2]
शोभयन्ति नृपते किलाखिलाः ।
तत्तवोचितमवैम्यनीकिनी-
प्रेषणं तनितुमस्य[3] पोषणम् ॥ २२ ॥

इत्यमात्यवचसा स वाहिनी-
प्रेषणं नरपतिर्मुदाशिषत् ।
तत्प्रतापसमतामिवाञ्चितुं
तीव्रतामधिजगाम चांशुमान् ॥ २३ ॥

भूरिपर्यटनजातपरिश्रमा-
दिक्प्रमोहमिव गाढमुद्वहन् ।

1. कृपाया औचिती पात्रे प्रदर्शनम्, क्रुधः सफलता करग्रहणे वैशसाव्यतिकरः क्रूरपीडाप्रयोगराहित्यम्, सर्वक्रियासु नीचोचितगतिवर्जनं च । 2. अस्मिन् संभूय निवत्स्याम इति मिथः संकेतकारिणः । 3. सेतुपतेः ।

आश्रितः स्तिमिततामभूदह-
मध्यमे कमलबान्धवः क्षणम् ॥ २४ ॥

नातपक्कथितमम्बुजोदरे
भोक्तुमक्षमत षट्पदो मधु ।
अर्दितोऽपि च पिपासयाग्रह
ग्रस्तमर्ध(र्थ ?)मिव तत्परो नगः[1] ॥ २५ ॥

मोहतश्चिचरिषुं क्षितौ वधू
स्वाङ्कगां छदविमर्शसान्त्वनैः ।
आतनिष्ट[2] वलभीविटङ्कभा-
गातपात्कलरवो[3]ऽतिकातरः ॥ २६ ॥

आतपोऽद्य बलवान् कुहापि[4] वि-
श्रम्यतां तदिति वर्त्मवर्तिनः[5] ।
सान्त्वनाय करुणावशादिव
च्छायया चरणलग्नया स्थितम् ॥ २७ ॥

गर्भसीमनि झषानपालयत्
तापितोऽपि तपनौजसा ततः ।
अम्बुजाकरवरो, निजव्यथां
न श्रितावनपरा हि मन्वते ॥ २८ ॥

---

1. अत्रोपमावाक्यर्थो न विशदः । 2. स्वाङ्कगामातनिष्टे-त्यन्वयः । 3. पारावतः । 4. कुत्रचित् । 5. पान्थस्य ।

आस्त जातकुतुकस्तदा भृशं
केलिकावनमुपेत्य भूपतिः ।
यत्र गाहितुमलं रवेः करा
नाभवन् नृपमहाभयादिव ॥ २९ ॥

शाखिकान्यजनव्रातनिर्मित-
श्रान्तिभङ्गमुदितामरार्पितम् ।
संश्रितैरिव सुधारसं फलै-
र्यत्र केरतरवश्चकासति ॥ ३० ॥

छायया निबिडया फलं रसो-
दञ्चितैरुपकृतिं चिकीर्षवः ।
वातदूतमुपहूतये नृणां
प्रेषयन्त इव भान्ति यन्नगाः[1] ॥ ३१ ॥

दारुणैः कुसुमकार्मुकस्फुर-
च्चञ्चरीककुलशिञ्जिनी[2]स्वनैः ।
पारयन् विरहिणां विगाहनं[3]
यत्र विस्फुरति पञ्चसायकः ॥ ३२ ॥

गुच्छकैस्सविधसालशाखिका-
पल्लवानुमिलितैर्लता नवाः ।
कान्तबाहुकृतकुङ्कुमाङ्कनै-
र्भान्ति यत्र वनिता इव स्तनैः ॥ ३३ ॥

1. वृक्षाः । 2. ज्या- । 3. प्रवेशम् ।

यत्र पादपशिरस्समाहृतै-
रुत्करैस्सुमनसां विनोत्थितिम्[1] ।
भूषितास्त्रिदशसुन्दरीजना-
स्तुङ्गकल्पतरुपुष्पनिस्पृहाः ॥ ३४ ॥

सुन्दरीभिरुपचारभङ्गिभि-
र्मन्दमन्दमपनीतश्रमः ।
आवहज्जलविहारकौतुकं
तत्र केलिसरसीं विलोक्य सः ॥ ३५ ॥

सा विलासरसीमहीपता-
वागते विकसिताम्बुजानना ।
हृतिमावहदिवोर्मिकाभुजै-
रेहि चारु विहरेति कौतुकात् ॥ ३६ ॥

भूमिभर्तरि मुदेव दर्शयन्
पद्मपूर्णकलशानुपागते ।
तारहारगणमम्बुजाकरो
दित्सुरूर्मिकपटादुपाददत् ॥ ३७ ॥

तस्य काञ्चन मयूरबर्हजं
तालवृन्तमभृतोपमस्तकम् ।
शोभते स्म स तदा रमापति-
र्मूर्धनीव फणिभोगसेवितः ॥ ३८ ॥

1. उत्थाय ग्रहणश्रमं विना हस्तान्तिकं गतैः । एतेन तत्रत्य-वृक्षाणामत्युच्चत्वमुक्तं भवति ॥

स प्रभुस्सह विलासिनीजनै-
मन्दमन्दमवतीर्य कौतुकी ।
केलिकासरसि केलिमातनोत्
कैटभारिरिव दुग्धवारिधौ ॥ ३९ ॥

भूरिवारिकरणै[1]स्सरोरुह-
क्षेपणैर्भुजविकर्षणैरपि ।
सुन्दरीर्विभुरनन्दयत्पयः-
खेलनेषु कुतुकेन ताश्च तम् ॥ ४० ॥

अंशुकव्यपनयेन कामपि
व्यक्तसुन्दरपयोधरां विभुः ।
आतनोज्झटिति सापि भूपतेः
पाणिना निजमुरः व्यधाद्वधूः ॥ ४१ ॥

ईदृशेन कलशेन[2] खेलनं
संविधेयमिति सस्मितं ब्रुवन् ।
कर्कशे कुचतटेऽर्पयन् करं
कामपि प्रमुदितामधत्त सः ॥ ४२ ॥

वारिखेलनपरां नरेश्वरः
काञ्चिदम्बुजमुखीमुरःस्थले ।
अम्बुजेन तनुते स्म ताडितां
चित्तभूरिव सरोरुहेषुणा ॥ ४३ ॥

---

1. निक्षेपादिकरणैः । 2. कलशमादाय जले प्लवनपरिचयः प्रसिद्धः ।

केति या नृपतिना विभाविता
वारिलीनवपुरम्बुजेक्षणा ।
सोत्थिता झटिति तं व्यलासय-
त्यश्चिमाङ्गपरिमेलितस्तना[1] ॥ ४४ ॥

मावधीरय मदीयमम्बुजं
भाभिरेवमिति पङ्कजाकरः ।
ऊर्मिदोर्मुहुरभिप्रसारणै-
रसान्त्वयन्निव मुखं विभोरभात् ॥ ४५ ॥

प्रेक्ष्य सारसदृशां पयोधरान्
केलिकासरसि कोकमण्डलम् ।
आगतं स्वकधियागमत्पुन-
र्निश्चलत्वकृतभेदनिश्चयम् ॥ ४६ ॥

न श्रमो विहरणेषु भूपते-
रित्युदञ्चितमुदम्बुजाकरः ।
तस्य मूर्धनि तरङ्गकैतवा-
न्मौक्तिकैस्समभिषेकमातनोत् ॥ ४७ ॥

भूभृता सह विलासिनीजनैः
क्रीडता सरसिजाकरे मुदा ।
अर्पिता इव निजाङ्गसङ्गता-
स्सान्द्रकु(स)ङ्कुमदकुङ्कुमादयः ॥ ४८ ॥

1. जलमज्जननिमीलनकेलिरनेन श्लोकेन वर्णिता ।

स्त्रीजनैस्सह महीपतिस्तत-
स्तीरमेत्य सरसस्समस्फुरत् ।
नाभ्रसीम्नि विपुलोपभोग इ-
त्यागतो ध्रुवमिवोडुभिर्विधुः ॥ ४९ ॥

पश्चिमाब्धिपतिते दिवाकरे
चन्द्रमास्समुदितोऽभवत्ततः ।
चन्द्रिकां विशदयन् विदन्निव
क्ष्मापतेर्विहरणेषु कौतुकम् ॥ ५० ॥

(नौविहारः)

भूपतिस्सकलचारुनावमा-
रुह्य पट्टपट[1]मण्डपे स्थितः ।
स व्यधत्त विलसन् दृशां मुदं
राजराज[2] इव पुष्पक[3]श्रितः ॥ ५१ ॥

स्निग्धपट्टपटमण्डपोन्मिष-
त्पुष्पगुम्भितवितानजृम्भि तैः ।
सारसौरभझरैस्स(त?)दाभव-
न्मज्जिताः किमपरं हरित्तटाः ॥ ५२ ॥

हर्षतो विहरति क्षमापतौ
सा निशाभवदहर्निशात्मिका ।
दीपचन्द्रमहसामुदञ्चितै-
र्नात्रि तीरभुवि च प्रपञ्चितैः ॥ ५३ ॥

---

1. दुकूलपट- 2. कुबेरः 3 तदाह्वं विमानम् ।

तीरधारितविराजिदीपिका-
बिम्बनैः[1] क्वचितोऽम्बुजाकरः ।
चम्पकाकर इवाभवत्तदा
नौविहारजुषि भूवलद्विषि ॥ ५४ ॥

राजतल्परिसरस्थभूषण-
श्रीभरो दश दिशः प्रसाधयन् ।
प्रस्मृतं किमपि हर्तुमंशुमान्
प्रत्युपेत इव पर्यभान्निशि ॥ ५५ ॥

गायकैश्च गणिकाजनैस्समा-
कर्णयन् मधुरगीतिमाहिताम् ।
उल्लसन् व्यहरदुत्कुतूहल-
स्संल्लपन् स कविभिश्शुभोक्तिभिः ॥ ५६ ॥

केलिकीर्णनवकुङ्कुमश्रिया
वीचिदोर्भिरभिरामरूषितैः ।
पर्यदृश्यत पयोरुहाकरः
कौतुकीव विहरन् धराभुजा ॥ ५७ ॥

नौविलासिवरवारसुन्दरी-
लोचनैरिव तदाम्बुबिम्बितैः ।
उत्पलैर्विकसितैस्सरोवरे
पर्यकल्पि जनलोचनोत्सवः ॥ ५८ ॥

---

1. प्रतिबिम्बैः ।

नौविहारमिति मेदिनीपति-
स्संविधाय कुसुमायुधोपमः ।
आस्त संप्रमुदिताशयो भृशं
सुन्दरीभिरधिकेलिमन्दिरम् ॥ ५९ ॥

मेदिनीवलभिदा दिनान्तरे
सेतुनेतुरनपायवाहिनी ।
प्रेषिताथ चलति स्म भेरिका-
भूरिकर्कशरवार्तदिक्तटा ॥ ६० ॥

अट्टहासरुचिफेनमण्डला
निर्मलासिवलदूर्मिमण्डिता ।
वेगलङ्घितमहीभृदावली[1]
वाहिनी निरगमद्धनारवा ॥ ६१ ॥

तस्य सैन्यनिवहस्य तेजसां
कः पुरोऽय[2]मिति भूरजोभरः ।
अर्कमुद्ग्रमितुमुत्थितोऽथ ख-
द्योत[3] एष इति किं न्यवर्तत ॥ ६२ ॥

वैरिणां निरुण धाम दुर्मदं
दारुणं विभिन दाम मर्म च ।
इत्ययुः समरकाण्डचण्डिमो-
दग्रीवितारभटि वाहिनीभटाः ॥ ६३ ॥

1. महीभृतः पर्वताः राजानश्च । 2. अयमिति सूर्यस्य निर्देशः । 3. सूर्यः ज्योतिरिङ्गणनामा कृमिश्च ।

कानानान्यपि गिरीन् झरीस्समु-
लङ्घ्य तद्बलमलङ्घ्यविक्रमम् ।
सेतुनाथवसुधां ततोऽगमत्
साध्वसं तु परिपन्थिमण्डलीम्[1] ॥ ६४ ॥

अस्मदङ्घ्रिनतिमाशु धत्त भोः
स्वाङ्गना यदि मताः सुराङ्गनाः ।
चेद्धनुर्नतिमिति द्विषत्सु ते
शाहभूवरभटा गिरोऽदिशन् ॥ ६५ ॥

तद्गिरातिकुपितैरसतिभिः
शाहभूवरभटच्छटां प्रति ।
प्रस्थितं झटिति पावकार्चिषं
दुस्सहां शलभमण्डलैरिव ॥ ६६ ॥

अञ्जसाधिकटकं चमूपति-
स्सन्निवेश्य कियतोऽपि सैनिकान् ।
दारुणप्रहरणां चमूं दधत्
प्रत्ययात्समिति माधुरं बलम् ॥ ६७ ॥

प्रस्फुरन्नलकवर्गनिर्गत-
प्रौढसीसगुलिकागणैरपि ।
रंहसा धनुषि संहितैश्शरै-
र्माधुरानुदनुदद्भटच्छटा ॥ ६८ ॥

---

1. भयं तु शत्रुसमूहमगमत् ।

दीपकैर्विरमणोन्मुखैरिव
व्यञ्जितं युधि तदा महन्महः ।
माधुरैरपगतक्षमाधुरै-
र्माणवर्षिभिरनीकवर्षिभिः[1] ॥ ६९ ॥

राक्षसौघमिव रामवाहिनी
देहिनी कदनसाहसोन्नतिः[2] ।
माधुरौघमधुनीत दारुणे
शाहभूपतिचमूस्तदा रणे ॥ ७० ॥

कुञ्जराः प्रमथिता हया हता-
स्स्यन्दना विदलिता हता भटाः ।
शाहभूमिपरगैर्निकैरिति
द्वेषिणो झटिति ते पलायिताः ॥ ७१ ॥

शाहभूहिमरुचेश्चमूपति[3]-
स्तन्निदेशमथ मूर्ध्नि धारयन् ।
सेतुनाथमतनिष्ट हृष्टमा-
धूतविप्लवमुपेतवैभवम् ॥ ७२ ॥

तेन सेतुपतिनार्पितां मणि-
श्रेणिकां च कियतीमपि क्षितिम्[4] ।

---

1. अनीके सेनायां युद्धे वा वर्षिभिः वृद्धैः । 2. कदनं नाशनं तत्र साहसं, तदुन्नतिः, तदतिरेकः । सैव देहिनी मूर्ता इवेति चमूपमा ॥ 3. भावजिनामा गङ्गाधरपुत्र. । 4. 'पट्टुक्कोट्टै-परिसरप्रदेशम् ।

शाहभूवलभिदे न्यवेदय-
यूथपः[1] पुनरुपागतो बलैः ॥ ७३ ॥

सेतुनाथपरिपालनेन सा-
टोपवैस्मिदनोदनेन च ।
कीर्तिवैभवमुदञ्चितं जना-
श्शाहनेतुरनुवन्नवं नवम् ॥ ७४ ॥

पर्यपाल्यत विभीषणश्च सु-
ग्रीव इत्यजनि जानकीपतेः ।
यद्यशस्तदुपमं यशःश्रितः
शाहभूप इति वर्णितो जनैः ॥ ७५ ॥

पाटलीकुसुमसारसौरभा-
श्लेषिणा तपऋतुर्नभस्वता ।
अन्वरुन्ध वसुधाधिपं तत-
स्तालवृन्तमरुतेव सेवकः ॥ ७६ ॥

प्रातिलोम्यमयमाश्रयन्मयि
स्थास्यतीति विदता तपर्तुना ।
गाढबद्ध इव हन्त नानिलः
प्राभवद्विचलितुं मनागपि ॥ ७७ ॥

ओदयात्सवितुरा विरामत-
स्ताप एव भजति प्रगल्भताम् ।

---

1. सेनापतिः ।

तालवृन्तपवनं तदा जनो
मन्यते स्म निजजीवनाडिकाम् ॥ ७८ ॥

कञ्चुलीमहह कान्तसन्निधौ
नो विनेतुमविनेतुमेव वा ।
चक्षमे नववधूर्निमज्जति
ह्रीनिदाघसमवायसङ्कटे ॥ ७९ ॥

नान्वमन्यत नवोढया यया
कञ्चुलीरहणमुत्सुके प्रिये ।
तत्तदा धुरि[1] तया स्वयं कृतं
तेन चोपबुभुजे दृशैव सा ॥ ८० ॥

मेलयन्नधिपयोधरं मुहु-
र्योषितो युवजनः करद्वयीम् ।
[2]घर्मशिष्टमितरेतराङ्गसं-
सर्गकर्कशनिषेधमत्यगात् ॥ ८१ ॥

तालवृन्तपवनैः श्रमच्छिदां
योषितां युवजनाः स्तनाञ्चले ।
अंशुकव्यपगमे वलद्दृशो
घर्मखेदमपि नर्म मेनिरे ॥ ८२ ॥

आदरेण विजने मनागव-
स्रंसिताग्रवसनाः कुलस्त्रियः ।

---

1. प्रारंभ एव। 2. घर्मो ग्रीष्मः। तत्तापेन प्रायो न सहन्ते हि अङ्गानि परस्परसंमर्दम् ॥

स्वेदबिन्दुहरमाननानिलं
मन्दमन्दमुरसि व्यचारयन् ॥ ८३ ॥

चन्दनैर्नवसिताभ्रसुन्दरै-
र्मल्लिकाभिरपि सादरं सतः[1] ।
शाहभूपतिरभूषयत्तदा
दिक्तटानिव निजैर्यशोभरैः ॥ ८४ ॥

मौक्तिकैरमलिनैश्च वीटिका-
चन्दनैस्सहिमवालुकैर्बुधाः ।
शाहभूमिरमणेन तोषिताः
स्वैर्गुणैरिव तदा मनोहरैः ॥ ८५ ॥

रामसेतुमवितं[2] स्वतेजसा
वीक्षितुं सकुतुकोऽथ धार्मिकः ।
मेदिनीपतिरधत्त निश्चयं
गंस्यतं शरदुपागतामिति ॥ ८६ ॥

प्रावृडास्त निबिडाथ वार्मुचां
मण्डलेन भयदा वियोगिनाम् ।
निर्गतस्य जगतीं जिगीषतो
वर्मणेव मदनस्य धन्विनः ॥ ८७ ॥

वारिवाहवलयावलोकिनः
केकिनः प्रमुदितास्सितच्छदाः[3] ।

---

1. साधून् । चन्दनपुष्पादिदानेन संमानितवान् । 2. रक्षितम् । 3. हंसाः ।

मानसं शरणमाशु मेनिरे
कामिनश्च सविधं मृगीदृशाम् ॥ ८८ ॥

तापितादतितरां तपर्तुना
दुस्सहश्रमभरोपपादिताः ।
अम्बरान्निरपतन्ननारतं
स्वेदबिन्दव इवोदबिन्दवः ॥ ८९ ॥

आतनिष्ट तटितस्समुद्गमे
क्रन्दितं रसितकैतवान्मुहुः ।
हा गता क्व चपला मम प्रिये-
त्यात्तवर्षनयनाम्बुरम्बुदः ॥ ९० ॥

केतकैः कनकभङ्गसुन्दरै-
स्सान्द्रिता वसुमती विकस्वरैः ।
पर्यशोभत परिच्युतैस्तटि-
त्खण्डकैरिव पयोदमण्डलात् ॥ ९१ ॥

मज्जितस्समभवत्कलानिधि-
र्लोकबन्धुरपि चावधीरितः ।
किञ्च हंसनिवहो निराकृतः
प्राभवं जलभृता वितन्वता[1] ॥ ९२ ॥

नैव संचरणकाल एष इ-
त्यम्बुवाहनिवहे समुत्थिते ।

---

1. कलानिधिश्चन्द्रो विद्वांश्च। लोकबन्धुस्सूर्यस्सज्जनश्च। हंसः तन्नामा पक्षी तत्त्वज्ञानी च। जलभृन्मेघः डलयोरभेदात् मूर्खपोषकः कोऽपि प्रभुः।

सुन्दरीपर इवावरोधभा-
गैक्षि नो बहिरहस्करो[1] जनैः ॥ ९३ ॥

काशते स्म निबिडा वसुन्धरा
विस्फुटैः कुटजपुष्पमण्डलैः ।
वारिवाहनिवहेन भूयसा
च्यावितैरुडुभिरंबरादिव ॥ ९४ ॥

अम्बुदेन तटितो मृगीदृशः
खेलनेषु कबरीभरच्युतैः ।
उल्ललास कुसुमैरिवाञ्चिता
सान्द्रवर्षदृष[2]दुत्करैर्मही ॥ ९५ ॥

द्योवधूघनपयोधरश्रियः
स्वेदभूम्नि पटुघर्मनिर्मिते ।
कुङ्कुमस्य कणिका द्रुतिच्युता-
श्शक्रगोप[3]ततयोऽभवन् ध्रुवम् ॥ ९६ ॥

वर्षणेन धरणेर्वलाहके
सौहितीं सृजति शाहभूपतिः ।
रम्यगेहधनभूषणादिमो-
र्वर्षणैस्समधिनोत्किलाखिलान् ॥ ९७ ॥

आकल्पयन् विमलतां सरितां दिशाना-
मप्यागतश्शरदृतुः स्पृहणीयलक्ष्मीः ।

---

1. सूर्यः । 2. वर्षदृषद् वर्षोपलः, करका । 3. इन्द्रगोप-क्रमि- ।

श्रीरामसेतुमुपयातुमथोपजात-
कौतूहलस्समजनिष्ट च भूमिपालः ॥ ९८ ॥

उन्मिषद्यवनजार्तिना ततो
राजरामविभुना समीरितः ।
दूत इत्यवदद्देत्य सन्निधिं
शाहमेदिनिपतेर्यशस्विनः ॥ ९९ ॥

राजरामनृपतेस्तुरुष्कजां
विप्लुतिं शमयितुं महीपते ।
प्रेषयाशु महतीमनीकिनीं
भूषयापि यशसा दिशोऽखिलाः ॥ १०० ॥

श्रुत्वा तद्राजरामक्षितिपतिविपदुद्धारबद्धादरश्री-
शाहक्ष्मापालमौलिर्यवनविदलनोच्चण्डपाण्डित्यभांजि ।
सैन्यानि स्वैरमश्वद्विपखुरजरजोदानधाराभिरब्धीन्
लुम्पन्ति स्थापयन्ति[1] द्रुतमदिशदथामंस्त सेतुं च यातुम् ॥

पश्यत्पादनयादिमाखिलनयस्वातन्त्र्यमन्यादृशं
धर्मिग्राहकमानसिद्धममृतस्फीताश्च यत्सूक्तयः ।
तस्य श्रीधरवेङ्कटेशसुधियो लिङ्गार्यसूनोः कृतौ
श्रीशाहेन्द्रविलासकाव्यतिलके सर्गोऽभवत्सप्तमः ॥

॥ इति श्रीश्रीधरवेङ्कटेशकृते श्रीशाहेन्द्रविलासे सप्तमस्सर्गः ॥

---

1. अश्वखुरजरजोभिरब्धीन् लुंपन्ति, द्विपदानधाराभिरब्धीन् पुनःस्थापयन्ति इति यथासंख्यम्, सैन्यानीत्यस्य विशेषणम् ।

## ॥ अष्टमस्सर्गः ॥

---

अथ क्षितीन्द्रो रघुनाथसेतु
प्रातिष्ठिताखण्डलविक्रमश्रीः ।
निषेव्यमाणः पृतनाप्रकाण्डै-
श्चण्डैः प्रतापैरिव मूर्तिमद्भिः ॥ १ ॥

विलोकमानं शरदस्समृद्धीः
करङ्कवाहो[1] वसुधासुधांशुम् ।
प्रयान्तमासेवत वाग्विलासै-
र्मुदं दधानस्समयानुरूपैः ॥ २ ॥

उदञ्चितश्रीणि शरद्विलासा-
न्मुदं वितन्वन्ति सरोरुहाणि ।
मुखानि विद्वत्कविमण्डलानां
भवत्प्रसादादिव भूवलारे ॥ ३ ॥

विलासवत्या तटिता[2] विहाराः
पुरो मयूरीनटनानि वा क्व ।
पयःप्रदानप्रभवो घनस्य
स्थिरः पयोदव्यपदेश एकः ॥ ४ ॥

प्रकल्प्य वर्षं पयसां समृद्धं
प्रभान्ति मेघाः प्रतिपन्नकार्श्याः ।

---

1. ताम्बूलपेटिकावाह पार्श्वचरः । 2. कृता इति शेषः ।

वितीर्य वित्तानि विधूतशङ्क-
मिमे वदान्या इव केऽपि धन्याः ॥ ५ ॥

मनो धिनोत्यम्बुरुहाकर[1]श्री-
र्मिलन्मिलिन्दैर्विशदारविन्दैः ।
प्रेमोपनीतैश्शरदेव सख्या
मुक्ताकरण्डैर्मृगनाभिमद्भिः[2] ॥ ६ ॥

आस्वाद्य हृद्यं बिसमम्बुजिन्यां
हंसो वसत्यंबुरुहोपधानः ।
नन्दन्मिलिन्दे मकरन्ददृप्ते
गीतिं वितन्वत्युपकण्ठभांजि ॥ ७ ॥

पिबन्मिलिन्दो मकरन्दचारु
क्षीरं पयोजातपयोधरस्थम् ।
सरोरुहिण्या श्रितयार्द्रभावं
प्रसाद्यते वीचिकरावमर्शैः ॥ ८ ॥

अनाविलैरम्बरतः पतद्भि-
रनेहसं तावदियन्तमिन्दुः ।
विमृष्टमूर्तिस्सलिलैरिवाद्य
विनिर्मलस्त्वन्मुखसाम्यमेति ॥ ९ ॥
निर्निज्यमाने शरदांबरेऽभ्र-
मलीमसे चन्द्रमयूखनीरैः ।

1. पद्माकर- 2. मृगनाभिगन्धस्य वर्णाद् भृङ्गसाम्यं, सिताम्भोरुहाणां च वर्णाकृतिभ्यां मुक्तापेटिकासाम्यम् ।

तन्नीलभागानिह विप्रकीर्णा-
नालोकयेन्दीवरकैतवेन ॥ १० ॥

सुधांशुरेतीति वियद्विताने
विभूष्यमाणे शरदा प्रसूनैः ।
तारात्मना कान्यपि तत्र भान्ति
च्युतानि तावद्भुवि कैरवाणि ॥ ११ ॥

सेतुप्रभुक्षोणिमितः प्रतापै-
र्गोपायितां विप्लवतस्त्वयेमाम् ।
विलोकयस्वाम्बुजबान्धवेन
तमिस्रजालात् किरणैरिव द्याम् ॥ १२ ॥

कर्णा मणीकुण्डलमण्डितान्ता
लम्बन्त एषां मुखकायमाने ।
प्रवृद्धये बद्धशिला इवान्ते
पटोलिकोदग्रशलाटवोऽमी[1] ॥ १३ ॥

चन्द्रातपेऽस्मिन् मदिरामदेन
सान्द्रानुरागास्सरसीरुहाक्ष्यः ।

---

1. एतत्प्रान्तीयस्त्रीणामाभरणभारेण लम्बकर्णत्वं प्रसिद्धम् पटोलिकानां दैर्घ्यवृद्ध्यर्थमन्ते शिलाखण्डबन्धश्च वाटीषु प्रसिद्धः कुण्डललम्बकर्णानां शिलाबद्धपटोलानां च साम्यम् । कायमा मण्डपम् । शलाटुः अपक्वं फलम् ।

पुरापराधाप्रतिसन्धितो[1]ऽमूः
कामोत्सवं वल्लभमर्थयन्ते ॥ १४ ॥

निजे मुखाब्जे मदिरां गृहीतां
निवेशयन्ती दयितस्य वक्त्रे ।
असौ नतभ्रूरधरं दशन्ती
तमातनोत्यञ्चितपारवश्यम् ॥ १५ ॥

मैरेयमास्वाद्य मदालसेयं
पीतावशिष्टे विमले किलास्मिन् ।
बिम्बं विधोर्बिम्बितमीक्षमाणा
हर्तुं मुहुर्वाञ्छति पक्ष्मलाक्षी ॥ १६ ॥

अस्यां भवत्प्रौढभुजप्रताप-
गोपायितायां भुवि भूमिदेवाः ।
आद्यूनता[2]दैन्यमपास्य नित्य-
कर्मोपपन्नास्सुखिता वसन्ति ॥ १७ ॥

प्रतापभूम्ना परिपालितास्ते
[3]तत्किङ्करोऽसाविति लोकबन्धुम् ।
उद्यन्तमुर्वीविबुधा भजन्तो
विलोकय प्राञ्जलयः स्फुरन्ति ॥ १८ ॥

---

1. पादपातादिसान्त्वोपायैः पूर्वापराधप्रतिसन्धानं विनैव। 2. आद्यूनता बुभुक्षया उदरपरता। । तत्प्रयुक्त-दैन्यमपास्य ; ब्रह्मदेयतया स्फीतां भूमिं प्राप्ता इत्यर्थः । 3. शाह-भूपकिङ्करः ।

धत्ते पयोधिर्नयनातिथित्वं
गभीरिमाणं त्वमिवादधानः ।
महीभृतां नैष तु दुर्विगाहो
न निष्फलोद्घोषपराङ्मुखो वा[1] ॥ १९ ॥

रामादिव प्रागधुनापि मा भूत्
त्वत्तस्समुत्माद इतीव भूयः ।
तटं नयत्येष तरङ्गहस्तै
रत्नानि दातुं तव राजमौले ॥ २० ॥

सरस्वती[2] मञ्चति बाडवं च
बिभर्ति भूभृद्भिरुपास्यमानः ।
आक्रान्तभूमीवलयश्चकास्ति
महीमहेन्द्र त्वमिवाम्बुराशिः ॥ २१ ॥

तटाभिमुख्येन तरङ्गरेखां
मुहुर्नुदन्नम्बुनिधिर्दधाति ।

---

1. 'तु' इति व्यतिरेकः । पयोधिर्यद्यपि त्वमिव गभीरः तथापि नैष महीभृतां पर्वतानां राज्ञां च दुर्विगाहः ; नापि निष्फलोद्घोषपराङ्मुखः । समुद्रान्तःपर्वतानामवगाढत्वात् , तस्य सततं वीचिभिर्वृथोद्घोषशीलत्वात् ॥ 2. सरस्वतीं भारतीं नदीं च ; बाडवं तन्नामानमौर्वमग्निं, ब्राह्मणं च । भूभृतः समुद्रान्तः शरणं गताः पर्वताः, सामन्तभूपालाश्च ॥

बाहां तिरोविक्षिपतोऽनुवेलं
मल्लस्य लीलां खुरलीविहारे ॥ २२ ॥

पुरा विहारावसरेषु कूल-
नीतं ग्रहीतुं किमपीव[1] भूयः ।
प्रसारयन्भाति करानुदग्र-
तरङ्गदम्भादिह वारिराशिः ॥ २३ ॥

तुङ्गायताङ्गानधिसिन्धु मीनाम्
प्लवानिवासाद्य नवानिहामी ।
अम्भोनराः[2] खेलनमावहन्ति
परिस्फुरद्गात्रपरिष्क्रियाभिः ॥ २४ ॥

तरङ्गिणी[3]मार्द्रतनुस्तरङ्ग-
परिस्फुरद्बाहुकृतोपगूहः ।
मीनाङ्कहेलाभि[4]रिह प्रहर्षं
नयन्नयं क्रीडति वारिराशिः ॥ २५ ॥

पतिः पयः पातुमिहोपयातः
पयोद इत्येत्य तटिद्विचेतुम् ।
अनीक्षमाणा तमिवेयमौर्व-
ज्वाला विभाति स्तिमिता नितान्तम् ॥ २६ ॥

---

1. किमपि शुक्त्यादिकं समुद्रजं वस्तु पूर्वं तरङ्गैः कूलं नीतम् । 2. जलमानुषा इति प्रोक्ताः समुद्रचारिव्यक्तिविशेषाः । 3. नदीं नायिकाम् । 4. मीनानामङ्के स्वोत्सङ्गे लालनरूपा या हेला ताभिः , मन्मथलीलाभिश्च ।

नद्या समं मीनदृशा विहर्तुं
रत्नाकरस्य क्षितिपालमौले ।
रतिप्रदीपश्रियमादधाति
विराजमानो बडबानलोऽयम् ॥ २७ ॥

ब्रुवत्यमुष्मिन्निति सेतुनेता
पुरोधरित्रीतलवासवस्य ।
अदृश्यतोदग्रचमूसमग्र-
स्तरङ्गितोत्तुङ्गतरोपहारः ॥ २८ ॥

निवेदितो वेत्रिवरेण सेतु-
नेतोपयातो नृपतेः पदाब्जे ।
अवन्दतानिन्दितरत्नहेम-
पुष्पोपक्लृप्तार्हणमुत्प्रहर्षः ॥ २९ ॥

हयद्विपस्तोमसमग्रहेम-
रत्नादिकोदारतरोपहारान् ।
निवेद्य नेतुर्धुरि सेतुनेतो-
त्तिष्ठन् गिरं प्राञ्जलिरभ्यधत्त ॥ ३० ॥

गोपायसि त्वं विपदां व्युदासै-
र्महीं महाराज ततस्त्वदग्रे ।
नालं समुन्मङ्क्तुमियं त्रपाब्धे-
र्मत्पालनोक्तिः पुनरुक्तिभावात्[1] ॥ ३१ ॥

---

1. त्वयि तथ्यतो महीं पालयति अहं पालयितेत्युक्तिः पुनरुक्तभूता सती लज्जाम्बुधौ मग्ना तत उत्थानाय नालम् ।

तवानुकम्पास्नपिता कटाक्ष-
भङ्गी यदङ्गीकुरुते विभो माम् ।
भ्रूकिङ्करं, तत्कृतितां[1] ममेमां
न वक्तुमीष्टे फणिनायकोऽपि ॥ ३२ ॥

अहं मदीयास्तनयाश्च दारा
मन्त्रिव्रजा भूमिरियं च राजन् ।
लब्धात्मकं त्वत्कृपया हि सर्वं
पश्यन् भवान् नन्दतु शास्तु चेदम् ॥ ३३ ॥

इत्थं गिरस्तस्य तथोपचारान्
कृतार्थयन् दृग्वलनैर्दयार्द्रैः ।
महीमहेन्द्रः सबलोऽचलेन्द्रं
स मादनं प्रैक्षत गन्धपूर्वम्[2] ॥ ३४ ॥

खड्गि[3]प्रकाण्डैरुपसेव्यमानो
भास्वत्तुरङ्ग[4]श्रितसन्निधानः ।
उर्वीभृदीशान[5]यशोऽनुरूपा-
मुत्तुङ्गशृङ्गो वहति स्थितिं यः ॥ ३५ ॥

विदारितानां मदकुञ्जराणां
मृगाधिपैर्यत्र पुलिन्दवध्वः ।
कुम्भच्युतेषूज्ज्वलमौक्तिकेषु
हारानुदारान् कलयन्त्ययत्नम् ॥ ३६ ॥

---

1. कृतिनो भावः कृतिता, ताम् । 2. गन्धमादनम् । 3. खड्गिनस्तन्नमानो मृगाः, खड्गवन्तो भटाश्च । 4. भास्वन्तस्तुरङ्गाः सेनाङ्गभूताः; भास्वतः उच्छ्रिततत्पर्वतशृङ्गसविधसञ्चारिणः सूर्यस्य तुरङ्गास्तद्रथयुक्ताश्च । 5. पर्वतराज-

यन्निर्झरोत्तुङ्गतरङ्गरेखा-
स्वभ्रंलिहासु त्रिदशाम्बुजाक्ष्यः ।
पाशभ्रमेणावतरीतुमुर्वी
करैर्जिघृक्षन्ति सकौतुकं ताः ॥ ३७ ॥

निजां क्षयग्लानिमतिग्मरश्मि[1]-
र्निराचिकीर्षन्निव सन्निधाने ।
यस्यौषधिप्राप्तिकृताभिलाषः
परिभ्रमं व्यातनुतेऽनुवेलम् ॥ ३८ ॥

स्वप्रातिलोम्यं दधदन्धकारो
गर्भाश्रयादस्य निरस्तभीतिः ।
इति क्रुधेवारुणमापतन्तं
यः स्वद्रुशाखालिभुजै रुणद्धि[2] ॥ ३९ ॥

धातून्वहन्नञ्चितनिर्झरश्री-
र्यः प्रस्फुरत्कुङ्कुमपङ्कलेपः ।
सपुष्पदामेव[3] भृशं चकास्ति
द्यामिन्दुवक्त्रां परिरब्धुकामः ॥ ४० ॥

अंहस्तमस्संहतिचण्डधामा
सौभाग्यभूमा वसुधासुतायाः ।

---

1. चन्द्रः । 2. गन्धमादनगिरिगुहाशरणाश्रयेण अन्धकारस्य सूर्यप्रातिलोम्यं दधतः निःशङ्कत्वेन वर्तनम् इत्यन्धकारं प्रति कोपेन सूर्ये समापतति सति, शरणागतवत्सलो यो गिरिः स्वद्रुमशाखारूपकरैः सूर्यं वारयति । 3. धातुकुङ्कुमलेपयोः निर्झरपुष्पदाम्नोसाम्यम् ।

श्रीरामपादाब्जपरागपूत-
स्सेतुस्ततोऽदृश्यत भूवरेण ॥ ४१ ॥

हरिः पुरा सेतुमधत्त रामो
हरः[1]पुना रक्षितावान् किलायम् ।
इति प्रहृष्टैरधिसेतुमीमं
शाहाधिनेता समभावि लोकैः ॥ ४२ ॥

स्नातः पयोधौ विधिना स राम-
कोदण्डकोटिव्यतिषङ्गधन्ये[2] ।
तीरे वसन्नुल्लसति स्म चन्द्रः
प्रेमातिरेकादिव सन्निधायी ॥ ४३ ॥

मणीनुदारान्महितं सुवर्णं
महीं फलौघैर्महतीं द्विजानाम् ।
निरस्तशङ्कं वितरन्नमानि[3]
निलिम्पसालावतरो[4] नरेन्द्रः ॥ ४४ ॥

---

1. स्वांशभूतशाहजिरूपेण । पुनारक्षितवानित्यनेन पूर्वमपि रामेण सेतुसंरक्षणार्थं रामेश्वररूपो हरस्तत्र स्थापितः पूजितश्चेति इतिहासः सूचितः । 2. धनुष्कोटिक्षेत्रे । 3. अमन्यत । 4. कल्पकवृक्षावतारभूत इति ।

समग्रदुग्धोर्मिलनिर्मलोधः-
समुज्ज्वलाः[1] काञ्चनचारुशृङ्गाः ।
अर्थिव्रजेभ्यस्सकमदान्मुदा गाः
संख्यावतां[2] भूपतिरस्तसंख्याः[3] ॥ ४५ ॥

शाहेन्द्रदत्तैर्नवहेमरत्न-
भूषाविशेषैः परिभूषितानाम्[4] ।
क्षितौ कदंबेन करम्बितायां
दैन्यं निरालम्बनतामयासीत्[5] ॥ ४६ ॥

गजान्मनोज्ञाः शिबिकाश्च शश्वद्-
दश्वानदिक्षद्विदुषां क्षितीन्द्रः ।
यैस्तेऽभिरामा वसुधाभुजोऽन्यान्
लज्जापयोधौ निरमज्जयन्त ॥ ४७ ॥

व्यधायि शाहप्रभुणा तदानीं
दानाम्बुपूरैरपरोऽम्बुराशिः ।
गाम्भीर्यतस्सिन्धुरयं स्वसाम्य-
मेतीति तद्दर्पजिहीर्षयेव ॥ ४८ ॥

ततस्स रामेश्वरमिन्दुमौलिं
मनोहरं स्कन्दगिरीन्द्रजाभ्याम् ।

---

1. पयःपूर्णोधसः । 2. विदुषाम् । 3. निस्संख्याः । 4. परिभूषितानामर्थिनां जनानां कदम्बेन । 5. शाहेन्द्रौदार्येण सर्वेषामेव दैन्यं नाशितमित्यर्थः ।

आराधयत्तत्र नुतिप्रणामैः
पुष्पैर्मणीहेमकदम्बकैश्च ॥ ४९ ॥

ततः क्षितीन्द्रस्सचमूसमूह-
स्तञ्जानगर्युन्मुखतां दधानः ।
प्रतिष्ठते स्मानुपमानतेजा
हेमन्तलीलामवलोकमानः ॥ ५० ॥

तदा तुषारैर्भृशमुन्मिषद्भिः
प्रातश्च सायं बलवन्निरुद्धः ।
मध्ये कियन्तंचन कालमर्को
मन्दं विमुक्तः कृपयेव रेजे ॥ ५१ ॥

पुरा स्वसंरम्भविरुद्धचारी-
त्यूष्मा सरोषेण मनोभुवेव ।
कठोरतुङ्गस्तनदुर्गसीम्नि
विलासिनीनामुपरुध्यते स्म ॥ ५२ ॥

चण्डद्युतिं यत्तुहिनप्रकाण्ड-
स्तदातदा पर्यभवत्तदास्ताम् ।
कदर्थयामास पयोजिनीं त-
त्कान्तां नितान्तं यदरुंतुदं तत् ॥ ५३ ॥

पिनह्यमाने भुवने तुषारै-
रर्थव्रजं लोक इव प्रमुह्यन् ।

रविर्व्यचैषी[1]दुदयाद्रिशृङ्गं
तदा तदस्योदयने विलम्बः ॥ ५४ ॥

हिमानिलेन व्रणितं नवोढा
तिरोदधानोपधिनानुवेलम् ।
बिम्बाधरं सीत्करणेषु नाल-
मालीपरीहासधिया तदासीत्[2] ॥ ५५ ॥

ऊष्मण्यशेषे परिमन्दभाव-
मुन्मेषभाजा शिशिरेण नीते ।
स्मरप्रतापोष्मभिरप्रतीपं
प्रगल्भमानैर्भुवने बभूवे[3] ॥ ५६ ॥

पुरोपकण्ठेऽथ नराधिनेतु-
रुपागमं पौरजना विदित्वा ।
विलोकनेऽमुष्य निविष्टचित्ता
वेद्यान्तरान्यैशत नावगन्तुम् ॥ ५७ ॥

दिदृक्षमाणा पुरि भूपतिं तं
काचिद्गलेऽधत्त सुवर्णकाञ्चीम् ।

---

1. तत्तद्वस्तुजातं जन इव रविरपि उदयाद्रिशृङ्गं मार्गयामास। 2. सख्यः परिहसिष्यन्तीति सीत्करणेषु नालमासीत् न प्राभवत्। 3. स्मरप्रतापोष्मभिः अप्रतीपं बभूवे निस्सपत्नं स्मरतापोष्मा प्रगल्भते स्म ॥

कर्णे मणीनूपुरमादधाना
परा सखीभिः परिहास्यते स्म ॥ ५८ ॥

काचिद्गलन्नीविपदं तदानीं
करेण गृह्णात्यगमन्मृगाक्षी ।
अजानती स्रस्तमुरोदुकूलं
कापि व्रजन्ती युवदृङ्मुदेऽभूत् ॥ ५९ ॥

पौरैस्समुत्कैरिति सेव्यमान-
स्तञ्जापुरीं प्राविशदुर्वरेन्द्रः ।
पुष्पस्फुरत्तोरणधोरणीभि-
र्हिमाम्बुसेकैरपि लोभनीयाम् ॥ ६० ॥

ततो निदिष्टस्य बलस्य राज-
रामावनोदारगुणां जयाङ्काम् ।
उपानयन् चारवराः प्रवृत्तिं
सिंहासनोल्लासिनि शाहभूपे ॥ ६१ ॥

वीटीप्रदानाद्युपचारभङ्गी-
धुर्यैर्नरेन्द्रैरुपसेव्यमानम् ।
शाहावनीन्द्रं सदसि प्रणम्य
मनोहरार्थामभणन् गिरं ते ॥ ६२ ॥

बलैर्महाराज भवन्निदिष्टै-
दिल्लीन्द्रसैन्यानि विदारितानि ।
स राजरामश्च तदाभिगुप्त-
स्तदञ्चति त्वां महती यशःश्रीः ॥ ६३ ॥

डिल्लीपतेस्संप्रति यूथपालाः
केचिद्गृहीता दलिताश्च केचित् ।
विद्राविताः केऽपि विभो त्वदीयै-
र्हताश्च तत्सिन्धुरसैन्धवौघाः ॥ ६४ ॥

स्वात्मा यदुज्जीवति रक्षति क्ष्मां
तत्त्वत्प्रसादादिति राजरामः ।
स मन्यते भूवलयामरेन्द्र
तदप्रतीप[1]स्तव हि प्रतापः ॥ ६५ ॥

प्रमोदसान्द्रः क्षितिपालचन्द्रः
श्रुत्वेति वाणीमधिगोष्ठि तेषाम् ।
सम्मानतोऽहर्षयदाशु चेत-
स्तस्य प्रसादो हि न जातु वन्ध्यः ॥ ६६ ॥

यस्य प्रसादप्रसरो न यावद्
दैन्यानुवेधो हि जनस्य तावत् ।

1. निस्सपत्नः' ।

यावन्न रोषादरुणोऽक्षिकोण-
स्तावन्नृपाणामवलेपभङ्ग्यः ॥ ६७ ॥

यज्जैत्रयात्रोद्यतभूरिभेरी-
ध्वाने समुन्मीलति कान्दिशीकः ।
डिल्लीश्वरो हन्त वनान्तझिल्ली-
सङ्गीतभङ्गीभिरुपैति हर्षम् ॥ ६८ ॥

यस्य प्रतापद्युमणावुदीत-
प्रत्यर्थिभूपालविलासवल्यः ।
दुरन्तकान्तारवनान्तवल्ली-
हल्लीसकोल्लासमुपाश्रयन्ते ॥ ६९ ॥

यद्धामकीर्त्योर्जगति स्फुरन्त्योः
पाण्ड्यादिभूभृत्प्रमदा वनीषु ।
कुतोऽत्र नः कुंकुमचन्द्रसंज्ञ[1]-
विलेपनश्रीरिति विस्मयन्ते ॥ ७० ॥

येनावदीर्णैस्समराङ्गणेषु
प्रतीपभूपैरवभिन्नमूर्तिः[2] ।

---

1. चन्द्रसंज्ञः कर्पूरम् । धाम्नः प्रतापस्य रक्ततया वर्णन-समयात्कुंकुमसाम्यात्, कीर्तेः स्वच्छायाः कर्पूरसाम्याच्चैवमुक्तिः ।
2. समरहतानां सूर्यमण्डलभेद इत्यागमात् ।

प्रकाममभ्यर्थतेऽस्य कोऽपि
मा भूद्विरोधीति मयूखमाली ॥ ७१ ॥

गोप्त्रा भुवो येन हतैः प्रवीरैः
स्वभोगकेलीषु हठं दधानैः ।
अद्धा नियुद्धेष्वनलं भवन्ति
बृन्दारकास्तुन्दिलिता हविर्भिः ॥ ७२ ॥

ऊर्जस्वलाभ्यासबलान् कलासु
विज्ञान्नवीनार्थविबोधनाभिः ।
विस्मेरयन् निस्तुलधीर्विभाति
देव्या गिरां यस्स्वयमन्तरात्मा ॥ ७३ ॥

सतां[1] तिरस्कारकरः करोति
सतां प्रमोदं विशदैर्यशोभिः ।
अनीति[2] रक्षन्नवनीमुदारः
प्रशस्यते यो भुवि नीतिशाली ॥ ७४ ॥

यमुर्वराचन्द्रमसं निरीक्ष्य
मनोभवोऽसाविति मन्यमानाः ।

---

1. सतां ज्योतिर्मण्डलानाम् । 'सन्नक्षत्रम्' इति कोशात्
2. ईतिबाधारहितम् ।

न पुष्पबाणो न च पुण्ड्रधन्वे-
त्याबिभ्रते विस्मयमम्बुजाक्ष्यः ॥ ७५ ॥

अमुष्य श्रीशाहक्षितिपतिवतंसस्य यशसा
पिनद्धे ब्रह्मण्डे शशिगरिमपाटच्चर[1]रुचा ।
सितग्रीवश्शम्भुर्धवलवपुरायापि च रह-
स्युभौ दृष्ट्वान्योन्यं मुहुरभवतां विस्मयजडौ ॥ ७६ ॥

विहरन्नधिराजमौलिचूडं[2]
विधुपादप्रणयी[3] यशोनिगुम्भः ।
धरणीपरिणेतुरभ्रगङ्गा-
झरीतीं[4]रुररीचरीकरीति[5] ॥ ७७ ॥

कस्तुल्योऽस्तु गुणग्रहेऽधिजगति श्रीशाहपृथ्वीपते-
र्येनारातिधराभुजामपि भुजागर्वानखर्वान् रणे ।
दर्शंदर्शमनन्यलभ्यमपि तज्जाम्भारिसंभावना-
गम्भीरं पद[6]मर्प्यते स्म सहसा हर्षप्रकर्षस्पृशा ॥ ७८

1. चोर- 2. राजमौलिश्चन्द्रशेखरःशिवः । राज्ञां मौलिश्च । 3. शिवशिरोवर्तिचन्द्रकरसंबद्धः, विधुर्विष्णुश्च, तत्पादप्रणयी, वियद्गङ्गाया विष्णुपदीत्वात् ः अथवा चन्द्रकिरणवत्स्वच्छश्च । 4. हरशिरोराजदाकाशगङ्गाप्रवाहशैलीः । 5. उररीचरीकरीति स्वीकरोति । तथा स्फीतं प्रससार । 6. स्वर्गम् । गर्वितान् रिपुभूभुजो रणे निहत्य वीरस्वर्गसुखं तेभ्यो ददौ ।

प्रतापप्राग्भारः क्षितिकमितुरालक्ष्यततरां
निलिम्पैस्साशङ्कं सुरगिरिरसौ कः पर[1] इति ।
वसद्भिर्हैमाद्रावपि यशसि तस्य प्रसरति
प्रकामं विस्मेरैरजनि रजताद्रौ[2] वयमिति ॥ ७९ ॥

डिल्लीराड्बलमर्दनैस्समिति यद्रामप्रभुं[3] त्रातवान्
सेतोरप्यधिपं तथैव मधुराराड्गर्वनिर्वापणैः ।
प्रत्यस्तप्रतिपक्षमाहिमगिरेरासेतुतो विक्रम-
प्राग्भारैरवनीतलं तदवतु श्रीशाहपृथ्वीपतिः ॥ ८० ॥

आनम्रक्षितिभृद्वतंसपरिषत्कोटीरकोटीमणि-
श्रेणीभासुरकेसरव्यतिकरश्रीमत्पदाम्भोरुहः ।
दिक्चक्रप्रतिकर्मकर्मठयशोनिस्तन्द्रचन्द्रातप-
श्रीशाहप्रभुमौलिरक्षति[4] मुदा चोलक्षितिं रक्षति ॥

इन्द्रश्शाहनृपात्मनावति महीमित्यागतेषु द्विज-
व्याजेन त्रिदिवेषु यत्र गगनस्रोतस्विनीव स्रुता ।
कावेरी नितरां धिनोति हृदयं देवद्रुमालीव च
प्रोन्मीलत्फलनम्रिताम्रकदलीकेरादिपारम्परी ॥

---

1. कोऽयमन्यो मेरुरिति । 2. कैलासे । धावल्येन मेरोर्व्याप्तत्वात् ॥ 3. राजरामम् । 4. अक्षति क्षतिरहितं यथा तथा ।

यत्राम्नायपुराणदर्शनमुखस्फारस्फुरद्भारती-
तत्त्वावेदनधोरणीमफलितच्छात्रा धरित्रीसुराः ।
शाहेन्द्रस्य भुजान्विताः क्रतुगणे[1] दीनै[2]स्समं निर्जरान्
धिन्वन्तः प्रतिभान्ति निर्मलतरप्रस्फूर्तिभिः कीर्तिभिः ॥

धान्यौघा विचकासति प्रतिपदं द्योरामृशन्तश्शिरो[3]
दैन्यस्यानवकाशभावघटनायैवाश्नुवाना दिशः ।
शक्रन्यक्कृतिधुर्यविक्रमभरं शाहावनीवल्लभं
यत्र क्षोणिधराः[4] पुरन्दरभया[5]द्गोप्तारमाप्ता इव ॥

श्रीमद्भोसलशाहभूवलभिदस्तेजोहुताशस्समि[6]-
त्संसर्गेषु यदश्नुते विलसनं यच्चाशुगैः[7]स्फायते ।
आस्तां तत्परवाहिनी[8]श्शमयते सस्नेहवर्ति[9]ष्वसौ
सन्त्राणं नियतं तनोति तदिदं धत्तेतरां विस्मयम् ॥

श्रीमद्भोसलशाहभूकमितुरुद्दामप्रतापानलः
प्रत्यर्थिक्षितिपत्यकीर्तिपटलीधूमं समुज्जृम्भयन् ।

---

1. क्रतुषु । 2. हविर्भिर्देवान् दानवितरणेन दीनान् । 3. द्योः शिर ऊर्ध्वतलमामृशन्तः । 4. पर्वताः, धान्यौघाः यैरुपामिताः । 5. गोत्रभिदिति भयात् । 6. युद्धम्, इध्मं च । 7. बाणैः, वातैश्च । 8. सेना नदी च । जलस्य तेजश्शमनत्वं संभवति, न तु तेजसः जलशमनमिति विस्मयः । 9. तैलवर्तिः, स्नेहेन वर्तमानः स्निग्धश्च । तैलार्द्रवर्तीनां क्रमेण वह्निना दाहः प्रसिद्धो न तु संरक्षणमिति विस्मयः ।

चण्डोदञ्चितहेतिताण्डवधरः प्रोल्लीढडिल्लीपति-
प्रौढानीकहविर्महाहव[1]समारूढः परिक्रीडते ॥ ८६ ॥

घनः परमृण[2]प्रदो गतिविवर्जितः स्वर्द्रुमः[3]
मणिश्च विधुताश्रयः[4] सुरगवी तृणग्रामिनी[5] ।
समा भवितुमीशतां कथममी जगद्धिन्वतः
समीहितसमर्पणैः प्रभवतोऽस्य शाहप्रभोः ॥ ८७ ॥

वाञ्छालङ्घिफलोच्चयप्रतिभुवो ग्रामान्बुधग्राम[6]सा-
त्कुर्वाणो यदखर्वकीर्तिविततिः श्रीशाहपृथ्वीपतिः ।
ईष्टे तत्र स एव नाम धरणावीशीत शीतद्युते-
रन्यः को नु मुदं विधातुममृतप्रस्यन्दिभी रश्मिभिः ॥

श्रीशाहभूमिकमनस्य यशोभरेण
नीतस्स एष परिभूतिमितीव लोके ।
विख्यापनाय विहितां विचकास्ति मुद्रा-
मङ्कश्रियं तुहिनदीधितिराददानः ॥ ८९ ॥

श्रीशाहक्षितिवल्लभस्य यशसां गुम्भैस्समुज्जृम्भितै-
र्धावल्यं प्रतिलम्भिते त्रिभुवने शैलाधिराजात्मजा ।

---

1. आहवो युद्धम् ; हवोऽध्वरः । 2. 'ऋणं देये जले' इति हैमः । 3. द्रुमस्य अगत्वात् । 4. 'विबुधाश्रयः' इति पाठः स्यात् ; मणिः चिन्तामणिः । विबुधाश्रयः देवाश्रयः, विगतो बुधाश्रयो यः तादृशश्च । 5. तृणग्रासिनीति निकर्षः । 6. समूह- ॥

विश्लेषे सति दुर्ग्रहत्वमुपयत्यर्धेन्दुचूडामणे-
र्वामाङ्गव्यतिषङ्गमप्रजहती चित्ते विधत्ते मुदम् ॥

ग्रामोत्तुङ्गतुरङ्गदन्तिशिबिकाहेमाभिषेकादिभि-
स्सानन्दं कविबृन्दमाकलयतश्शाहेशितुः कीर्तयः ।
मुक्तादामपरम्पराः परिलसन्मल्लीमतल्लीस्रजः
भद्रश्री[1]रचना भजन्ति ककुभामाकल्पमाकल्पताम् ॥

श्रीमद्भोसलवंशमौक्तिकमणेश्श्रीशाहपृथ्वीपते-
रायुः स्फीतिमुपैतु सन्तु तनयाः प्रख्यातभाग्यश्रियः ।
पारावारपरीतभूवलयसंत्राणस्थितिं वर्धतां
गौरीकान्तकृपाकटाक्षविभवैराचन्द्रमातारकम् ॥

पश्यत्पादनयादिमाखिलनयस्वातन्त्र्यमूर्जस्वलं
धर्मिग्राहकमानसिद्धममृतस्फीताश्च यस्योक्तयः ।
तस्य श्रीधरवेङ्कटेशसुधियो लिङ्गार्यसूनोः कृतौ
श्रीशाहेन्द्रविलासकाव्यतिलके सर्गोऽजनिष्टाष्टमः ॥

॥ इति श्रीश्रीधरवेङ्कटेशकृते श्रीशाहेन्द्रविलासेऽष्टमस्सर्गः ॥

॥ श्रीशाहेन्द्रविलासकाव्यं संपूर्णम् ॥

---

1. चन्दन- । मुक्तामल्लीसितचन्दनानां धवलकीर्त्युपमत्वात् ।

# NOTES: TEXT

CANTO I. Śl. 3. The Śiva-form referred to here is Tyāgarāja at Tiruvārūr. On Tyāgarāja as the patron-deity of the Tanjore Maratha rulers, and Śāhaji's devotion towards this deity especially, see Introduction.

Śl. 5. On the assignment of the family of these rulers to the Solar race, see beginning portions of panegyrics or introductory verses of some of the works of Śāhaji's court-poets referred to in the Introduction. See especially Gangādhara Vājapeyin's Bhosalavamśāvali, (Tanjore 4232, चण्डांशोरन्ववाये) Sangīta Makaranda of Veda, (Tanjore 10724) and Vākyāmrta (Tanjore 11327).

Śls. 5-6. The Kosala-Bhosala equation is a common idea in the eulogies in most of the works of this court. Rāmabhadra Dikṣita, Unādimanidīpikā. (Tanjore 5675) Introduction verse 4

एकराजो दशरथः दीपाम्बा कोशलात्मजा ।
श्रीरामो जनितस्ताभ्यां नूनं शाहनृपात्मना ॥

Nallā Dīkṣita's Dharmavijaya Campū, verse 2, compares Śāhaji's birth to Rāma's (Tanjore 4231). In fact Śeṣācalapati composed a *double entendre* poem Kosala-Bhosalīya dealing at one stroke with the stories of Rāma and Śāhaji (Tanjore 4233).

11. As Māloji had no issue for a long time and he had two sons born to him consequent on the prayers offered by a Muslim Saint Shah Sharif of Ahmednagar, the two sons were named after the saint as Shah-ji and Sharif-ji. (See p. 2, fn 1. Introduction in my edition of Śṛngāramañjari, Hyderabad Archaeological Dept. Publication) It is these names that repeat in the Tanjore Maratha line.

51. It is said here that Dīpābai, Queen of Ekoji, belonged to the Ingila family. I enquired of Prof. P. K. Gode about the Ingle family, and he, of Rao Bahadur G. S. Sardesai, the veteran Maratha historian. Here is Mr. Sardesai's reply communicated by Prof. Gode: "I have long been searching for a full genealogy of the Ingle family. I have only a small portion belonging to the late 18th century of Trimbakji and Ambuji Ingle, who served Mahadoji Scindia. So the branch I have belongs to the *post-1770 period* and does not concern *Dīpābāi* who flourished a century earlier. Tanjore records alone can give us the clue. There is a branch of the Ingles at Kolhapur, but they have no genealogies. Some of them were my friends. So I am unable to help Dr. Raghavan".

CANTO I. 62 & „ II. 3. } The simile of poetry here is in consonance with the usual description of Śāhaji in the writings of the time as an

incarnation of the Goddess of learning and poetry. *cf.* Jīvānanda, Prologue: श्रीशाहराज इति नाम दधत्याः सरस्वत्याः and शाह-भूपतिरूपेण गिरां देवी जाता ।

CANTO II. 7. Refers to the large number of eulogies and works produced in his honour, as shown in the Introduction.

98. It is on the basis of this verse that it is said that Ekoji abdicated in favour of Śāhaji.

99. For the performance of sacrifices in this period see Introduction. Most of the authors described in the Introduction are 'Dīksitas'.

105 Embodies a Tamil saying.

110. When Śāhaji was ruling, his two younger brothers were also exercising authority from two different centres as Governors, Serfoji from Śākkottai and Tulajā from Mahādevapattanam.

CANTO VI. 23-25. The description of the court-hall as made of particles drawn not only from Laksmī but also from Sarasvatī and the very parrots there exhibiting their literary connoisseurship. The full significance of all this can be realised from the perusal of the Introduction.

38. The leading place that Sanskrit Grammar took among the favourite subjects of cultivation at this time may also be seen from the Introduction.

40. Refers to the sacrifice conducted by Tryambakarāya at Svāmimalai.

45. This shows that Ānandarāya was still young at this time.

22 ' गुणाः समयबन्धकारिणः '— On this not uncommon idea of endowments 'conspiring' to meet together in the hero, see also the contemporary playwright Cokkanātha's verse (5) in the prologue to his Kāntimatiparinaya on Śāhaji.

गाम्भीर्याद्याः सुगुणा यस्मिन्निवसन्ति कृतसमयबन्धाः ।

CANTO VIII.73, 82, 83, 88, 90. } On Śāhaji's learning, his patronage and gift of villages on the banks of the Cauvery to scholars and poets, and other honours shown to them by him, see Introduction.

## NOTES: INTRODUCTION

P. 30. Works of Paramaśivendra Sarasvati: Besides the three works noted there, another is also known, the Bhūtirudrākṣa-māhātmya. Hultzsch notes two mss. of it in the Temple Library at Tiruvidaimarudūr and in the private collection of the well-known Rāmasubbā Śāstrin of Tiruviśanallūr (Report II. nos. 1004. 1509.)

P. 61. Other authors of Śrīdhara family: Besides Śrīdhara Peru Sūri noted there, there was also a Śrīdhara Gurumūrti at the nearby Tiruvaiyāru (Pañcanadakṣetra), who wrote the Śivatattvasārasaṃgraha candrikā. (Madras No. R. 3664).

